# सिद्धान्तसिद्धापगा.



शुद्धाद्वैतपुष्टिमार्गसिद्धान्तपण्डितेन

भट्टश्रीबलभद्रशर्म्मकविकाव्यरत्नाकरेण

प्रणीता।



मोहमयीवर्त्तिनि

निर्णयसागरयन्त्रालये मुद्रिता,

प्रणेत्रा च

शुद्धाद्वैतसिद्धान्तकार्य्यालया-

त्प्रकाशिता.

संवत् १९६९.

मूल्यमानकपञ्चकम्।

# विशेषतो द्रष्टव्यम्.

अतीतः किल सार्धो वत्सरो मुद्रायन्त्रमारोपितायाः सिद्धापगायाः। किन्तु दैवादेकत्र स्थितिमलभमानैः प्रकाशयितुमेतामतिपातितोऽस्माभिः कालः। ततश्च बहुभिरेव पुनः पुनः पर्य्यन्वयोजिष्महि महाभागैः किमेतत्कृत एतत्कथमेतच्चेत्यादि। किम्पुनः प्रतिपद्यतां प्रतिवचनमत्राऽस्माभिरिति यत्सत्यं विषीदामः। व्यतिकरेष्वेवंविधेषु क्षमाभ्यर्थनमेव परमा प्रतिक्रियेति च प्रतिपद्यमाना आवध्नीमः पाणी।



सुलभप्रमादा हि जन्तव इत्यक्षरग्रथकानां प्रमादादुताहो अस्माकमनवधानात्सन्दृश्यमानाश्च्युतयः पण्डितानां चेतसि न भावान्तरमुपजनयेयुः। मुद्रणसंरम्भेण च मात्रानुस्वारविसर्गाणां विपरिलोप इतस्ततोभावश्च सुलभः।



प्रबन्धस्याऽस्य पुनर्मुद्रणाद्यधिकाराः प्रणेतर्य्यायतन्ते।



Published by Bhatta Shri Balabhadra-Sharma
Shuddhadwaita Siddhanta-karyalaya,
Bada mandir, Bhuleshwar, Bombay.

Printed by R. Y. Shedge at the "Nirnaya-sagar" Press,
23, Kolbhat Lane, Bombay.

श्रीशः शरणम्.

## विवक्षितं ह्यनुक्तमनुतापं जनयति !



अस्ति किल दक्षिणापथे विपश्चिदपश्चिमम्मन्यः कोऽप्यनन्ताचार्य्य-नामा रामानुजो यः काञ्चीमधिवसन्मञ्जुभाषिणीं नाम साप्ताहिकीं संस्कृतसंवादपत्रिकां प्रकाशमुपनयति । तत एव च सुदुर्लभसौभाग्यभाजनमिति, निरवधिधिषणावधीरितविबुधोपाध्याय इति, वाङ्मयमहाम्भोनिधिस्वैरविहारसाहसिक इति, सर्वातिशायिसमुच्छ्रयोन्मिषदशेषोत्कर्ष इति, सुधासूतिरिव लोकोत्सवोदयश्चण्डमरीचिरिव दुष्प्रधर्षप्रतापः पारावार इव दुस्तरतमो हंस इव च विदितविवेकवैदग्ध्य इति चाऽभिमन्यते य आत्मानम् ।

एष च वैक्रमविंशशतकस्य सप्तषष्टितमे वत्सरे कुतोऽपि सलिलनिधिविलोललहरीलीलाहल्लीसकोल्लासितलास्योत्सवां मोहमयीं नगरीमनुप्राप । इह च श्रीमद्भगवद्वदनवैश्वानरश्रीमदाचार्य्यचरणान्ववायदुग्धोदधिसुधादीधितीनां महाराजोपपदपरिचर्य्यमाणपादपीठानामाचार्य्याणान्तांस्तानदृष्टश्रुतपूर्वानभ्युच्छ्रयानवलोकयन्नीर्ष्याभ्यसूयासुलभेन प्रद्वेषकृशानुना तथा प्रचक्रमेऽयमभिसन्तापयितुं यथा क्षणमपि न किल नाऽस्य चक्कथे हृदयेन । न चैतच्चित्रम् । यथाऽऽहुरभियुक्ताः—'परसम्पदुत्कर्षो हि हीनसम्पदं दुःखाकरोती' ति ।

अत्रैव चाऽवसरे यथाकथाच प्रसिद्धिमात्मानमारोपयितुमसङ्गीतकं नृत्यता निसर्गपुरोभागिना षडक्षरपरिचयपर्य्यवसितषड्दर्शनपरिश्रमेण सकलसत्सम्प्रदायप्रद्वेषपातकोपार्ज्जनप्रयासपरिहृतव्यापारान्तरेण विशेषतश्च श्रुतिसीमन्तिनीसङ्गीतरसास्वादैकबद्धादराञ्छुद्धाद्वैतपुष्टिमार्गपथिका-

न्परमभगवदीयान् कषायिताक्षिकोणं कटाक्षयता कलहैकवल्लभेन श्रीमता माधवतीर्थकर्मन्दिना कापि पुस्तिका प्रकाशमुपनिन्ये यत्र तेन तप्तमुद्रा-पक्षपातिनः परिजिहीर्षता विशिष्टाद्वैतिभिरितरैश्च समाचर्य्यमाणस्य तप्ता-युधधारणस्य सकलाधिकारिसाधारणतां वा नित्यतां वा निरस्यन्नूर्ध्वपु-ण्ड्रमार्तण्डस्य समुदधारि कोप्यंशः । ततश्चाऽस्य करतलमुपनमन्त्यैव तया सर्पिर्धारयेव प्रववृधे प्रद्वेषवैश्वानरो येन प्रतिपत्तिमूढ एवाऽयमभिसम्पेदे । अपरिहार्य्यश्चैतत् । यथा प्राहुरभियुक्ताः—'ज्वलति चलितेन्धनोऽग्निरि'ति ।

ततश्च प्रवृत्त एवाऽयमकस्मात्तैस्तैर्दुरुक्तैः शुद्धाद्वैतिनः प्रत्यवस्थातुम् । यत्सत्यमसदृशमिदं मानुष्यस्य, विपरीतं श्रद्धाया, अननुरूपं पाण्डित्यस्य, प्रतिकूलञ्च स्वसिद्धान्तपक्षपातस्य, यदात्मनो मतमधिक्षिपन्नाऽपवा-र्य्यते न वा प्रतिवध्यत इति । यदुच्यते—'यो यत्राऽनुरक्तः स तदन्य-तिरस्कारेण तदेव वहु मन्यत' इति । किन्तु सर्वथाऽप्यपरिहार्य्यो विवेक इत्यपुनरुक्तिसव्यपेक्षम् । यदाह कविप्रवरः श्रीमान् राजशेखरः—'अविमृश्यकारिता हि पुंसः परं परिभवस्थानमि'ति । केन पुनः श्र-द्धीयतामेतत् । प्रद्वेषाभिभूतो हि नैव क्षमते पर्य्यवस्थापयितुमात्मानमिति ।

यदि तु नैषोऽभ्यभविष्यत प्रद्वेषेण न खलु तर्हि परस्परेभ्यो द्रुह्यद्भिरुपचीयमाने कलहसाम्राज्ये तेन च प्रत्यहमधोधः प्रविशति भा-रते वर्षे मतावष्टम्भेन प्रत्यवस्थानमभद्रमिति, सर्वत्राऽपि सम्प्रदायेषु प्रथमत एव स्वसिद्धान्तोपज्ञाः प्रबन्धा अप्रतिहतप्रचारा इत्यसमञ्जसो मन्युरिति, सम्प्रति प्रतिमतोपमर्दधिया विरचितानां प्रवन्धानां परिहारस्य नाऽन्याय्य-त्वेऽपि संख्यातिगेषु प्राक्तनेषु तेषु प्रद्वेषसाहसं विचारमोहं प्रतिभासयतीति, नायं प्रत्यग्र ऊर्ध्वपुण्ड्रमार्तण्ड इति तन्निवर्हणप्रवृत्तिः केवलकलहोदर्केति, प्रवृत्तोऽपि समर्थयितुमात्मनोऽभिमतं प्रभवेयं न वेति, शुद्धाद्वैतिभिः सह मयैष विग्रहं ग्राहयितुमेवैवं कर्मन्दी व्यवस्यत्यन्यथा तमिममंशमनु-द्धरताऽपि शक्यमेतेन स्वमनोनुरूपं चेष्टितुमित्यलं विगृह्येति, मुखे निष्ठी-व्यन्तमनपवार्य निरपराधिषु शौर्य्योपसर्पणं जुगुप्सास्पदमिति च किमपि न

व्यत्रेक्ष्यत् । तन्नैतदद्भुतमात्रद्धः परिकर एतेन निष्ठुराण्येवाऽभिभाषितु-मिति । अभियुञ्जते चाऽभियुक्ताः । यदाहुः—'अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिता' इति । यथा चैतत्तथा मञ्जुभाषिण्याः षष्ठाष्टमनवमत्रयोर्विशेष्वङ्केषु सुविस्पष्टमिति व्यापार्यतामभितस्तत्र जि-ज्ञासुभिरात्मनश्चक्षुः ।

तावताऽपि दुर्व्यवसितेन नायमभितुतोपेत्यन्ततः शुद्धाद्वैतसिद्धा-न्तेनैव प्रत्यवस्थेयमित्यास्थितमतिश्चतुर्विंशे तदङ्के 'शुद्धाद्वैतमतं वल्लभमतं वे' ति शीर्षकं लेखमेकं प्राकाशयत् । प्रैरिरच्चैनं तत्तेभ्य उद्दिश्य कति-पयेभ्य आचार्येभ्यश्च तदनुगामिभ्यश्च ।

यदा चैष नः करतलमुपनतस्तत्रैव दिनेऽस्माभिर्मद्रपुरं प्रास्थीयते-त्यवसरानुपलम्भान्नाऽनुवाचयितुमपारि । तत्र लब्धावसरैरनुवाच्यमान-स्तु प्राचीकशदात्मनः प्रद्वेषपूर्णताञ्च पौरोभाग्यमात्रप्रवृत्तिताञ्च पाण्डि-त्यसौरभसम्पर्कशून्यताञ्च समुत्तालशिखालवालवचःसब्रह्मचारिताञ्चेति तादृशासदृशकोलाहलेन समुन्मिषदीपद्रोपैरपि काममप्यन्यादृशीमुपहास-शालिनीं पद्धतिं प्रतिपेदुपोऽस्य चेष्टितकेन समुन्मीलन्मन्दस्मितैरननु-रूपेह नः प्रवृत्तिरित्युपेक्षितोऽयमस्माभिः ।

युक्तञ्चैतत् । यदाहुः—'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा' इति—'सर्वगुणातिशायिनी खल्वियं क्षान्तिरि'ति—'अन्योन्यमाहात्म्यविदोरन्यैरविदितात्मनोः । विभ्राजते विरोधोऽपी' ति—'विरूपाः खलु जना निजमुखदोषं निर्मलेष्वपि दर्पणेषु समर्पयन्ती'ति—'न खलु बधिराणां कुतूहलमातनोति कोकिलालाप' इति—'किं नु खलु दर्दुरा व्याहरन्तीति देवः पृथिवीं वर्षितुं स्मरती' ति—'किं महोरगविसर्पि-विक्रमो राजिलेषु गरुडः प्रवर्त्तत' इति च ।

अतियत्सु च कतिपयेषु दिवसेषु सहधर्मिण्या च तनयया च सह तीर्थान्यासेवितुमात्तादरैः प्रास्थायि श्रीश्रीरङ्गं नाम वैष्णवं धामाऽ-स्माभिः । यत्र यथाविधि श्रीमतीं कावेरीमवगाह्य विप्लोषितवृजिनजालै-

रन्वभावि श्रीश्रीरङ्गराजपादसरोरुहसौरभ्यं यदाप्याययदपि सर्वाणीन्द्रियाणि क्षणमपि नातिवर्तत आसेचनकताम् ।

ततश्च काञ्चीमधिगम्य तीर्थविधिमनुतिष्ठद्भिश्चराचरप्रपञ्चोदञ्चापचयचतुरस्य भगवतः श्रीवरदराजस्य पादपङ्केरुहपरागपांसुना पाण्डुरित आत्मनो मूर्धा । तदैव च बलवदुत्कण्ठितं नश्चेतः प्रेक्षेमहि कानपि तावदिहत्यान्पण्डितप्रवरान्सङ्गृह्णीमहि च कियतोऽपि श्रीमद्रामानुजाचार्य्यैरारचितान्प्रबन्धानिति । ततश्च प्रथमतोऽनन्ताचार्य्यस्यैव प्रावेशि सदनमस्माभिः । तत्र च तदनुसन्धानपरैर्देशान्तरमेष सम्प्रत्यधितिष्ठतीति प्रतिवचनमर्पयन् साक्षात्कृतः कोऽप्यण्णङ्गराचार्य्यनामा जनो यस्तस्य तनयो वा भ्राता वा यः कोऽप्यन्यो वा सम्बन्धेति नाऽद्यत्वे यथावत्स्मर्य्यते ।

शुद्धाद्वैतपुष्टिमार्गानुगता एत इत्याकलयता चोपस्थापिताऽनेन सैव प्रद्वेषमूलिका दुश्चेष्टितचर्चा यत्र कलहभिया विवादमनाचरन्तस्तथा निरस्तातिथिसत्कारञ्च सुदूरोदस्तविनयञ्च विगलितविवेकञ्च सन्दीपनाक्षरञ्चाऽभ्यधायिष्महि यथा महानेव समजन्यतदर्हेषु क्षान्तिनिर्बन्धमादधत्यात्मन्युपक्रोशः, प्रादुरासीच्च चेतसि निर्वेदः पिशुनेषु मार्दवं पराभवभूमिरिति, समुपारोहच्च स्मृतिपथं कविकुलगुरोः श्रीमतः कालिदासस्य वचनं–'विवक्षितं ह्यनुक्तमनुतापञ्जनयती' ति।

इदञ्चाऽपि नश्चित्ते समुद्गतमहो नः प्रमोहो यदुत स्वातिदेशेन सर्वत्र बुद्धिः । न हि न विमुह्यन्ति कपटपटुभिः पिशुनैः प्रतारयितुमपार्य्यमाणेषु प्रगल्भेष्वप्रत्युत्पन्नमतयः । यत्सत्यमननुभूतशास्त्रसौगन्धिकगन्धश्च प्रवृद्धप्ररोषकृशानुशातितसकलमनीषिमर्य्यादश्चैते चेष्टन्ते, तथापि न किल न व्यामुह्येयुरनभ्यस्तपाण्डित्यप्रभाणि मनुजानां मनांस्येतेन । तदिह सर्वथाऽपि नाऽतिचरितव्य आत्मनोऽधिकार इति । तत एव च प्रत्यज्ञायि निर्दिष्टनामधेयो लेखः खण्डयितुमस्माभिर्येनाऽमुष्य निबन्धुर्विव्रियेत दर्पश्च व्युत्पत्तिविरहश्च बलवत्तरः प्रद्वेषश्च यथा नाऽन्यथा

बुद्धेरत्नारिमृष्टप्रज्ञाः । न चैतदसमञ्जसम् । यदाहुः—'बार्हस्पत्य स वै नाऽत्र साधुत्वं दुर्जनैरितः । दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः । न तथा तप्यते विद्धः पुमान्बाणैः सुमर्मगैः । यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः' इति ।

ततश्च काशीतः प्रस्थाय श्रीशेषशैलतटकुञ्जशिखरशिरोगारुत्मतमणि-शेखरश्रियो भगवतः श्रीश्रीनिवासस्य चरणनलिनमिथुनमानोज्ञकमधु-धोरणीं विलोचनप्रसृतिभ्यां भूयो भूय आकण्ठमप्यविरमदभिलाषाति-शयमापीय यथागतं मद्रपुरं प्रतिनिवृत्तैरुपक्रान्तमस्माभिरात्मनः प्रतिज्ञां पूरयितुम् । किन्तु तैस्तैरशक्योदाहारैः समभिहारेणाऽभिपतद्भिः प्रतिबन्धैः प्रसह्य व्यापारान्तरपारतन्त्र्यमापादिष्महीत्यहो प्रार्थितार्थसिद्धीनां विघ्न-निघ्नत्वम् । तत्रापि श्रीमदाचार्य्यचरणपादप्लवमुपाश्रित्य निस्तीर्णवाऽस्माभिः प्रतिज्ञास्त्रोतस्विनीति मनोरथानामुपरि प्रवर्त्तामहे । तत्र च पुरत उप-स्थाप्यमानेयं—'सिद्धान्तसिद्धापगे'व प्रमाणमित्यलं विस्तरेणेति शिवम् ।

शुद्धाद्वैतसिद्धान्तकार्य्यालयः,<br>बटामन्दिर, भूलेश्वर,<br>बंबई.

विनीतवशंवदो—<br>**भट्टश्रीबलभद्रशर्म्मा,**<br>कविः, काव्यरत्नाकरश्च.



# श्रीसुबोधिनी!!!



विदितमेवैतत्सकलस्य श्रीमदाचार्य्यचरणपादारविन्दमकरन्दलिहः सुरसर्गस्य यत्किल सर्वोद्धारप्रयत्नात्मनो भगवतः श्रीपुरुषोत्तमस्य निदेशत्रिदशशैवलिनीं शिरसा स्वीकृत्य तज्ज्ञानावतारेण श्रीमत्कृष्णद्वैपायनपरमाचार्य्येण श्रीमद्भागवतं नाम सर्वसन्देहनिरासकं किमपि शास्त्रं प्रादुर्भावयाम्बभूव इति । एतच्च भगवदनुग्रहैकसंवेद्यमित्यैकान्ततो दुरवबोधमिति भगवद्वदनवैश्वानरैः श्रीमदाचार्य्यचरणैः श्रीसुबोधिनी नाम कापि तद्व्याख्या विरचयाञ्चक्रे । एषा च तत्तद्भगवदभिमतसिद्धान्तोद्भासनभासुरा श्रीश्रीकृष्णपदपाथोजप्रसृमरामन्दमाध्वीकधारासम्पातानुप्रासस्पृहणीयतमा प्रतिमतमत्तमातङ्गावलेपविलोपपारीन्द्रसप्रभा विविधवादोपवनविहारव्यसनिविद्वद्वरेण्यसमर्पितकुतूहला चेति नैतदंशतोऽप्यतिशयोक्तिं स्पृशति । न किल काव्यानामिव साधारण्येषा व्याख्या न वा टीकान्तरानुकारिणी किन्तु विलक्षणतमेति नेह संशयलेशोऽपि । एषा हि भाष्यसब्रह्मचारिणी भाष्यमेव वा श्रीमद्भागवतानुशासनस्य । इयमपि च कलिकुकूलदग्धधियां दुरवबोधा च दुरूहविशेषा चेति परमकारुणिकैः श्रीप्रभुचरणैष्टिप्पण्या श्रीवल्लभगोस्वामिभिर्लेखोद्येन महता प्रबन्धेन श्रीपुरुषोत्तमपादैः प्रकाशेन श्रीबालकृष्णभट्टैर्योजनया तैस्तैरन्यैः पण्डितप्रकाण्डैस्तत्तद्विप्रकीर्णाशार्थापनपरैः परस्सहस्रैः प्रबन्धैश्च समसेव्यतेत्यहो अनिगम्यगहनार्थानि श्रीमदाचार्य्यचरणवचनानि । एष च सर्वोऽपि ग्रन्थसमुदयः साम्प्रदायिकानां विद्याव्यासङ्गविपरिलोपाद्विद्यासंरक्षण एकान्ततो वैमुख्याच्च सम्प्रति सुदुर्लभतमो विलीनप्राय एव वेत्यहो कष्टम् । श्रीसुबोधिन्यपि च तेषु तेषु कतिपुचित्पीठेषु गिरिकाभिर्निगीर्य्यमाणा मत्कुणैर्मालिन्यमुपयाप्यमाना कीटैश्च कवलीक्रियमाणा शीर्णशीर्णैरावेष्टनैः कथञ्चिदाच्छादितशरीरा कष्टङ्कष्टमेवाऽतिवाहयति दिवसान् प्रायेण । तमिमं सम्प्रदायोपप्लवमालक्ष्य विषण्णैः श्रीश्रीगोकुलनाथगोस्वामिचरणैर्यथोपलम्भं ग्रन्थमुद्रणं प्रतिज्ञातवद्भिरारब्धमिदानीं भट्टश्रीबलभद्रशर्म्मकविकाव्यरत्नाकरसाहायकेन श्रीसुबोधिनीं सम्मुद्रयितुम् । अनतिचिरादेव च तत्प्रथमस्कन्धः प्रकाश्येत । तत्त्वर्य्यतां कृतार्थयितुमात्मानं दैवसर्गेणेति भूयो भूयोऽभ्यर्थयामहे । इति शम् ।

कार्य्यकर्त्ता.

# सिद्धान्तसिद्धापगा.



तत्सृष्टिस्थितिसंहृतीति यदिदं कृत्स्नं, विकारः पुन-
र्वाचारम्भण एव, नाम विहृतीर्निर्वन्द्य यस्याऽऽत्मनः ।
नाना यत्र तदक्षरं, विकृतयो रूपे च यस्य क्षरे
दुग्धां श्रीपतिनाम काममिह नस्तद्वेदवेद्यं महः ॥ १ ॥

श्रीमद्वल्लभदिव्यदेशिकपदप्राचीप्रतीतोदयै-
रासेदुः शरणं न यैर्हतदृशो दुर्वादिनो वायसाः ।
राकाकामुकभांसि तानि कुशलक्ष्मापालमौलिप्रभा-
श्रेणीभिस्ततमांसि निर्जिततमांस्यर्चींषि पुष्णन्तु नः ॥ २ ॥

१ श्रीमद्वेदव्यासविष्णुस्वामिमतपुण्डरीकमण्डलमण्डनमार्तण्डश्रीमद्वल्लभाचार्य्यभगवत्पादीये शुद्धाद्वैतमते ब्रह्मणोऽविकृतपरिणामवादमुताहोस्विद्भङ्ग्यन्तरेण कृत्स्नमपि तन्मतं कटाक्षयता श्रीमता विशिष्टाद्वैतसिद्धान्तिना मञ्जुभाषिणीसंस्कृतसंवादपत्रिकासम्पादकेन प्रथमत एव सम्भृतनिर्भरसंरम्भगम्भीरसम्भ्रमया सरण्या सङ्ग्रथितः कोऽपि 'शुद्धाद्वैतमतं–वल्लभमतं वे' ति शीर्षकः शङ्कानिबन्धः सह समाधिदिदृक्षया जातु प्रकाशमुपानीयतेति तदनुरोधमवन्ध्यं विधित्सवः प्रस्तुमः प्रक्रममिमम् ।

२ तत्रादितस्तावत्स्वेन परिजिहीर्ष्यमाणं शुद्धाद्वैतमतमस्तीत्यादिना मन्यन्त इत्यन्तेन लेखेनाऽनूद्य, तत्र च स्वमताऽ-

विसंवादितया **अत्रेदं वक्तव्यमित्यादिना प्रदर्शनाच्चेत्यन्तेन** कञ्चिदंशमविमतमभ्युपगम्य, शुद्धाद्वैतसैद्धान्तिकेषु तत्तदाकरनिबन्धेषु सुदृढशास्त्रोक्तियुक्तिभिः प्रपञ्चितमपि ब्रह्मणो जगद्रूपेण परिणामित्वेऽप्यविकारित्वं **तथापीत्यादिना सत्युन्मत्तप्रलपितत्वापत्तेरित्यन्तेन** न क्षमते **सोऽयम्** ।

३ तत्र ब्रूमः । अहो नु खलु भोः ! प्रत्यक्षपक्षपातिता **पण्डितपारीन्द्रस्य** भवतो, यदुत सर्वप्रमाणमौलिमालतीमालां **श्रुतिमपि** प्रत्यक्षप्रमाणातीतमर्थमुपपादयन्तीं नाऽभ्युत्सहते सोढुम् । प्रत्युताऽऽपत्तिप्रदर्शनापदेशेन प्रमत्तामेव तामेतां व्यपदिशति । तदेष सुदुर्निरसो भवता स्वोक्तिभङ्ग्यैकगम्यो **वेदस्याऽप्रामाण्यवादः** । मिथ्या च भवतो **विशिष्टाद्वैतसिद्धान्तिताभिमानः** । न किल जात्वपि ते बभूवांसो भवन्तो भविष्यन्तश्च तथा प्रतिपेदिरे प्रतिपद्यन्ते प्रतिपत्स्यन्ते चेति । नच श्रुतेस्तदविरुद्धत्वविरुद्धत्वाभ्यां प्रामाण्याप्रामाण्यव्यवस्थितिं कुत्राप्युपलभामहे । अन्यथा ज्योतिष्टोमादिभिः स्वर्गाद्यदृष्टभावनायास्तदविरुद्धत्वस्याऽशक्यसाधनत्वात्तादृशपुरुषार्थोऽपूर्वविधीनां प्रमत्तप्रलापताप्रसङ्गः सुदुष्परिहरः । अलौकिकार्थस्यैव श्रुतिप्रतिपाद्यत्वात् । तस्य च तदविषयत्वात् । अन्यथा निर्विशेषत्वप्रसङ्गात् । किञ्च । प्रत्यक्षनिर्विशेषमर्थं प्रतिपादयति वेदे कोऽयं डिण्डिमाडम्बरस्तत्प्रामाण्यवादिनां **'प्रमाणं परमं श्रुति'** रिति । तमन्तराऽपि तद्योग्यतामनुज्झतामर्थानामवबोधसम्भवात् । कृत्स्नस्याऽपि च वेदस्याऽनुवादार्थवादत्वप्रसङ्गात् । भ्रमविप्रलिप्सादीनामसद्भावादिति **चेद्धट्टकुटीप्रभातम्** । अभ्युपगमेऽपि

च न तद्विरुद्धत्वव्याहतिः। अन्यथा पुनः प्रतिपादितो निर्विशेषत्वप्रसङ्गः।

४ किञ्च। प्रत्यक्षन्तावल्लौकिकं विवक्षितमुताहो अलौकिकम्? नाद्यः। वेदस्य मात्रयाऽपि तदविरुद्धार्थप्रतिपादकत्वे पुरुषदोषासद्भावस्य वक्तुमशक्यत्वात्। न द्वितीयः। तत्राऽप्येकान्ततस्तदसद्भावस्य सम्भवदुक्तिकत्वासम्भवात्। इतरथा स्मृत्यधिकरणविरोधाधिकरणादीनामुपेक्ष्यत्वप्रसङ्गात्। विपर्य्ययेण च तदधिकरणप्रणयनापत्तेः। श्रीमत्कृष्णद्वैपायनादीनाञ्च भ्रमविप्रलिप्सादिभिरसद्भिरपि विप्रलिप्सत्वापत्तेः। अन्यथा त्वस्मदभिप्रेताऽप्रतिपिद्धसिद्धेश्च। ऊर्ध्वस्रोतसां योगिनां ज्ञानस्यैवाऽलौकिकपदाभिलप्यत्वात्। तत्राऽपि प्रायेणाऽऽगमगम्यार्थानां विपर्य्याकारात्प्रत्युत विपर्य्ययाच्च। किञ्च। इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायावेदकत्वादेव सर्वमतसम्मता वेदस्य वेदता। यदाहुः—'प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुध्यते। एनं विदन्ति वेदेन तस्माद्वेदस्य वेदते'ति। ततश्चाऽऽहुः श्रीमदाचार्य्यपादाः—'अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते। तपसा वेदयुक्त्या वा प्रसादात्परमात्मन' इति।

५ इदमुक्तं भवति—धर्मश्च ब्रह्म चेत्युभयं वेदार्थः। प्रमेयत्वात्। धर्मब्रह्मप्रतिपादकापौरुषेयनित्यनिर्दुष्टशब्दराशेरेव वेदपदव्यपदेशात्। उभयञ्चैतल्लौकिकप्रत्यक्षातीतम्। तत्र प्रथमस्य तथात्वं पूर्वतन्त्रीयस्वरूपलक्षणाद्यधिकरणैस्तत्तच्छ्रौतस्मार्त्तवचनैरितरतश्च सुप्रतिपन्नपूर्वम्। परस्य पुनः सिद्धपूर्वमप्यनुपदं

ते सेत्स्यति। एष तु प्रज्ञापराधो भवतस्तादृशालौकिकापौरुषेय-नित्यनिर्दुष्टस्य शब्दराशेर्वेदस्य यत्किमप्यपदिश्य यदप्रामाण्यो-त्प्रेक्षणं नाम। वयं पुनः श्रीमदाचार्य्यचरणपरिचरणप्र-वणतया नांऽशतोऽपि वैदिकभागवतैरभ्युपेयमिदं ब्रूमः। श्रीमदाचार्य्यपादाश्च प्राहुः—'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि। समाधिभाषा व्यासस्य प्रमाणन्तच्चतुष्टयम्। उत्तरं पूर्वसन्देहवारकं परिकी-र्तितम्। अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा। एतद्विरुद्धं यत्सर्वं न तन्मानं कथञ्चने' त्यादि। वेदाश्च—ब्रह्मणः प्राकृतातिरिक्तनित्यनिर्दुष्टवेदैकवेद्यत्वमावेदयन्ति। प्रति-षेधन्ति च तदितरप्रमाणसंवेद्यत्वम्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'। 'तन्त्वौपनिषदं पुरुषं पृ-च्छामी' ति। 'न चक्षुषा पश्यति कश्चनैनम्। न चक्षुषा गृह्यते नापि वाचा। यतो वाचो निवर्तन्त' इति च। श्रीकृष्णवाक्यञ्च भगवतः प्राकृतप्रमाणप्रतिपत्त-व्यतां परिहरति। 'न च मां शक्यसे द्रष्टुमनेनैव स्वच-क्षुषा। दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वर-मि' ति। नचाऽऽगमैकसंवेद्यत्वेन विरोधः। 'यमेवैष वृणुते तेन लभ्य' इति श्रुतेः। वरणञ्च प्रसादजन्यम्। तदेवाऽऽह भगवान्—'मया प्रसन्नेन तवाऽर्जुनेदं रूपं परं दर्शित-मात्मयोगादि' ति। वस्तुतस्तु—'मुह्यन्ति यत्सूरयः। तत्र मुह्यन्ति सूरयः। शब्दब्रह्म सुदुर्बोध' मित्यादिवचःप्रपंचै-स्तत्तादृशालौकिकार्थस्य सुदुर्बोधत्वात्तदेकसंवेद्यत्वस्याऽपि भगव-

दनुग्रहैकसाधनत्वम् । 'इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चने' ति श्रीमद्भागवतभगवद्वाक्यात् । तत एव आहुः श्रीमदाचार्य्यपादाः-'वा प्रसादात्परमात्मन' इति । एतच्च व्याचक्रुः श्रीमत्पुरुपोत्तमाः-'परमात्मप्रसादो मुख्यं साधनम् । अन्यथा-'तेषां प्रकृतिवैचित्र्याच्चित्रा वाचः स्रवन्ति ही' त्यादिन्यायेनाऽन्यदेव बुद्ध्येतेति' इति । तेन-'न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः । एवं रूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीरे' त्यादेर्न 'सर्वे वेदा यत्पदमामनन्ति । वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुतिस्मृतिविरोधः । प्रथमत एव तत्र स्वप्रसत्तेर्भगवता प्रकटीकारात्त्वदन्येनेत्यस्य मत्प्रसादाननुगृहीतेनेत्यर्थात् । तथाच तत्तच्छास्त्रीयपदार्थानां तत्तदाचार्य्यप्रसादैकसम्प्रतिपत्तव्यत्वेऽपि न यथा तत्तदेकप्रतिपाद्यत्वसंवेद्यत्वव्याहतिस्तथेहापि न किञ्चित्क्षतिविक्षुभितम् । विशेषः पुनः सर्वशक्तिमतो निरङ्कुशैश्वर्य्यशालिनः सत्यसङ्कल्पस्य भगवतो निरतिशयानुग्रहाद्वेवेति नाऽनुपपत्त्युपप्लुतं किमपि ।

६ तत्र भवान् कृष्णद्वैपायनपरमाचार्य्योऽप्येनमेवाऽर्थमुपसूत्रयति-'जन्माद्यस्य यतः शास्त्रयोनित्वादि' ति । अर्थस्तु-वेदप्रतिपाद्यकारणत्वादिति । योगं विभजमानानामन्यथा चाऽर्थापयतां मते दोषास्तु भाष्यप्रकाशाभ्यां सुलभावगमा इति नेह प्रस्तुतेतरविस्तरः प्रस्तूयते । द्वितीयस्य प्रथमे च तमिममेवाऽर्थं सूत्रेणोपष्टभ्नाति-'श्रुतेस्तु शब्दमूलत्वादि' ति । एतदर्थानुरोधि श्रीमद्रामानुजभाष्यन्तु पुरत उपन्यसिष्यामः । श्री-

मद्वैयासिकी समाधिभाषाऽपि प्रतिपित्सितमेवाऽर्थमुपवर्णयति– 'नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनामि' ति। योगजप्रत्यक्षविषयत्वव्यासेधपक्षे तु कैमुतिकलभ्यो लौकिकप्रत्यक्षतापरिहारः। एष एव च पक्षो ज्यायान्। जन्माद्यधिकरणभाष्यप्रकाशे–'नापि योगिप्रत्यक्ष'-मित्यादि वदद्भिः श्रीमत्पुरुषोत्तमैस्तथैवाऽभ्युपगतत्वात्। कुयोगिता पुनरननुगृहीतत्वात्सूपपादा। अन्यथा विदूरकाष्ठतायोगात्। तत एव षष्ठस्यैकादशे–'न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे' इत्युक्त्वा 'अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्त्ताः। प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वा'मिति भगवद्दिदृक्षां प्रकाशयन्योगसिद्धेरपि तद्दर्शनसाधनत्वाभावमवसाययति वृत्रः। 'सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम। देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण' इति भगवद्वचनेन च कैमुतिकैकगम्यः स एवाऽर्थः स्फोर्य्यते। अन्यथा पुनः स्वारस्यभङ्गादपेरनतिप्रयोजनत्वापातः सुदुष्परिहरः। नच योग्यन्तरं तदर्थः। विनिगमनाविरहात्। प्रत्युत प्रपञ्चितैकवाक्यतया तदर्थस्य तदनुगृहीतत्वात्। यच्च– 'एतद्धि दुर्लभतरं लोके जन्म यदीदृश' मित्यस्य– 'इदमल्पीयसीं योगसिद्धिं गतस्य मृतस्य फलं, यदि प्रथमां योगसिद्धिं गतो म्रियते त्यजति वा योगं श्वेतद्वीपे जायते भगवत्सालोक्यं वा याति, यदि ततोऽप्यधिकां योगसिद्धिं गतो म्रियते विष्णुपार्षदो

भवति, यदि ततोऽप्यधिकां द्वारपालो भवति, यदि ततोऽप्यधिकां भगवतोऽङ्गसंवाहको भवति, यदि ततोऽप्यधिकां मन्त्रिस्थानीयः पृथगैश्वर्य्ययुक्तो भवति, यदि पूर्णां योगसिद्धिं गतो म्रियते भगवत्सायुज्यं गतो मुक्तः परमैश्वर्य्ययुक्तो भवति' इति वैष्णवेषु योगशास्त्रेषु मर्यादा । तदेतत्सर्वमिह सूचितं भगवता– 'अथवा योगिनाम्, इत्यादिने' ति यादवप्रकाशव्याख्यानं, नापि तद्यथोक्ताभ्युपगमेऽपि व्याकुप्यति । सिद्धयोगसिद्धीनामपि तादृशफलोपलम्भस्य प्राकृतप्रतीकपरित्यागनान्तरीयकत्वस्य ततः स्फुटत्वात् । तत्रापि तत्प्रसादस्य साधनत्वात् । अनुजिघृक्षाभावाविनाभावे तत्सिद्धेरव्यतिरेकव्यभिचारित्वात् । इतरथा–'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषती' त्यादिश्रुतिव्याकोपापत्तेः । नच दर्शनकाङ्क्षित्वमन्यतोऽप्युपपद्यत इति वाच्यम् । श्रीमद्रामानुजाचार्य्यादिविरोधप्रसङ्गात् । तथाच तद्भाष्यम्–'अस्य रूपस्य देवा अपि नित्यं दर्शनकाङ्क्षिणः नतु दृष्टवन्त' इति । इदञ्च व्याचकार निगमान्तदेशिकः– 'नित्यमित्यस्य पदार्थैकदेशदर्शनान्वयस्याऽगतिकस्याऽऽश्रयणमनुचितमित्यभिप्रेत्याऽऽकाङ्क्षाया नित्यत्वं दर्शनाभावमवगमयतीत्याशयेनाऽऽह–न तु दृष्टवन्त' इति । वस्तुतस्तूभयस्य वेदार्थस्य लौकिकेतरशब्दातिरिक्तलौकिकालौकिकोभयप्रमाणसंवेद्यतायाः पूर्वोत्तरतन्त्रयोस्तत्तदधिकरणेषु परिहृतत्वाच्छास्त्रैकसमधिगम्यमेव नित्यनिर्दुष्टाद्भुताचिन्त्याजर्य्यनिरङ्कुश-

निरतिशयैश्वर्य्यशक्तिमत्सर्वज्ञं ब्रह्म । युज्यते चैतत् । न किल– **'विश्वतश्चक्षुरुत विश्वतो मुखः । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सर्वतः पाणिपादन्तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति । अनेकबाहूदरवक्त्रनेत्र'** मित्यादिश्रुतिस्मृतिसहस्रोपश्लोक्यमानमचिन्त्याद्भुतमहिमानं परमात्मानमीशते केऽपि तदन्यथाप्रक्रियया विज्ञातुमिति ।

७ किञ्च । योऽयं भवान्वेदस्य **प्रत्यक्षविरुद्धार्थप्रतिपादकत्वे** प्रमत्तप्रलपितत्वापत्तिं प्रतिपद्यते, यच्च ब्रह्मणः सर्वज्ञत्वसर्वशक्तत्वपरिणामित्वादि, यच्चाऽचिद्वृत्तिपरिणामित्वस्य परम्परया तद्वृत्तित्वेऽपि प्रोक्षणावहननादिदृष्टान्तेन ब्रह्मणि मुख्यत्वमाचष्टे, न किल न तेन वदन् व्याहन्यते । लोके हि न कोऽपि **दृष्टः श्रुतो** वा सर्वज्ञः सर्वशक्तो जगदाकारेण वा परिणमन् । नापि लोकतोऽवगतं प्रोक्षणावहननादीनां केनापि **यज्ञशेषत्वम्** । तदेष अत्यर्थिनः परासिसिषया प्रहरतो मुग्धस्य कण्ठे **कुठारः** । कृतमतिप्रसङ्गेन । इदम्पुनरविप्रतिषिद्धं सिद्धम्—यदुत निखिलप्रमाणातिरिक्तदिव्यापौरुषेयनित्यनिर्दुष्टशब्दप्रमाणकं नित्यनिर्दुष्टाद्भुताचिन्त्यनिरङ्कुशनिरतिशयैश्वर्य्यशालि निखिलकल्याणानन्तगुणगणमपरिच्छिन्नस्वाभाविकानन्तविचित्रशक्तिमत्सर्वज्ञं सच्चिदानन्दं ब्रह्मेति इति ।

८ एतदुक्तं भवति–**'आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिषत्, स ईक्षत लोकान्नु सृजा इति, स इमाँल्लोकानसृजत । प्रजापतिर्वा एकोऽग्रेऽ-**

तिष्ठत, स नाऽरमतैकः, स आत्मानमभिध्यात्वा बह्वीः प्रजा असृजत । सोऽकामयत बहुस्यां प्रजायेयेति । स तपोऽतप्यत, स तपस्तप्त्वा इदꣳ सर्वमसृजत । आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्, स वै नैव रेमे, तस्मादेकाकी न रमते, स द्वितीयमैच्छत्, स हैतावानास । सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयम्, तदैक्षत बहुस्यां प्रजायेयेति, तत्तेजोऽसृजत । ईक्षतेर्नाशब्दम् । कामाच्च नाऽनुमानापेक्षा । अभिध्योपदेशाच्च । लोकवत्तु लीलाकैवल्यम् । यथा क्रीडोपस्कराणां संयोगविगमाविह । इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ अंशांशास्ते देव मरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः । क्रीडाभाण्डं विश्वमिदं यस्य विभूमंस्तस्मै नित्यं नाथ नमस्ते करवाम ॥ क्रीडार्थमात्मन इदं त्रिजगत्कृतन्ते स्वाम्यन्तु तत्र कुधियः पर ईश कुर्युः । कर्त्तुः प्रभोस्तव किमस्यत आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादा' इत्याद्येकवाक्यतापन्नश्रुतिसूत्रश्रीभागवतवचनानि—'यतो वा इमानि भूतानि जायन्ते । तस्माद्वा एतस्मादाकाशः सम्भूतः । कर्तारमीशं पुरुषं ब्रह्मयोनिम् । स आत्मानꣳ स्वयमकुरुत । आत्मकृतेः परिणामात् । अहं सर्वस्य प्रभव' इत्यादीनि च श्रुतिसूत्रस्मृतिवचनानि ताद्दशस्याऽपरिच्छिन्नस्वाभाविकानन्तवि-

चित्रशक्तिमतः सर्वज्ञस्य ब्रह्मणो रिरंसैकप्रयोजनां निमित्तताञ्चो-पादानताञ्च कर्तृताञ्च जगदात्मना परिणामिताञ्च श्रावयन्ति ।

९ अभ्युपेयते चैतत्कृत्स्नमपि तत्तैरेव वचोभिः **श्रीमद्रामानुजाचार्य्यैः** स्वयञ्च प्रथमतः—**यद्यपि सर्वज्ञमित्यादिना मृद्घटादिदृष्टान्तप्रदर्शनाच्चेत्यन्तेन** लेखेन भवता । तत्र तावदिदं पृच्छामः—यदुत केवलस्य ब्रह्मणो निमित्तत्वादि निखिलमपि लोकदृष्टप्रक्रिययोपपद्यत आहो नेति? किन्तावत्प्रतिपत्तव्यम्? नेति । कुतः? तादृशश्रुत्युदाहरणस्य प्रमत्तचेष्टितत्वापत्तेः । स्वोक्तिबाधापातात् । स्वाचार्य्यविद्वेषित्वप्रसङ्गाच्च । किञ्च । यदिदमुपपद्यते तत्किल केवलया लोकदृष्टप्रक्रिययोताऽऽहो तयैव वेददृष्टाविरोधिन्या? न पूर्वः । जगदुपादानतायास्तदात्मना परिणामितायाश्च ब्रह्मणि प्रमाणान्तरानवसेयत्वात् । तादृशश्रुत्युदाहरणस्य विशेषतोऽशिष्यत्वप्रसङ्गाच्च । तत उत्तरो व्याख्यातः । युक्तञ्चेदम् । अतीन्द्रियेऽर्थे वेदाविरोधिन्यास्तस्या अनुपेक्ष्यत्वाभ्यनुज्ञानात् । यदाहुः—**श्रीमद्रामानुजाचार्य्या** विलक्षणत्वाधिकरणभाष्ये—'**अतोऽतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम् । तदुपबृंहणायैव तर्क उपादेयः । तथाचाऽऽह—आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणाऽनुसन्धत्ते स धर्मं वेद नेतर इति । वेदाख्यशास्त्राविरोधिनेत्यर्थ**' इति । तदिदं मुग्धस्य मनस्तोषमात्रफलम्—यदाहुः—'**वेदशास्त्राविरोधिने**'ति । वस्तुतस्तु तादृशोऽपि तदुपबृंहणोऽपि तर्को न तादृशोऽर्थस्य प्रामाण्यदार्ढ्यमापादयति । किन्तु बोधसौलभ्यमेव सम्पादयति । तद्वेदैकदृष्टप्रक्रिययेत्येव सुवचम् । अनैव-

मभ्युपगमे तु श्राचामपौरुषेयीनामार्षाणाञ्च वाचां व्याकोपः सुदुष्प्रसहः । तथाहि—क्षीरवत्केवलं कर्तारमाहोस्विदधिश्रयणातञ्चनादिवन्निमित्तमप्यनपेक्ष्य ब्रह्मणो दधिभाववज्जगद्भावस्य लोकदृष्टप्रक्रिययोपपत्तावपि यथा क्षीरस्य तथाभावे देशकालाद्यपेक्षा न तथा ब्रह्मण इत्येष न शक्यतेऽर्थस्तथोपपादयितुम् । केवलन्तु **'सदेव सौम्येदमग्र आसीत् । सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् । आत्मन्येवाऽऽत्मनाऽऽत्मानं सृजे हन्म्यनुपालये । स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः । आत्मन्येवाऽऽत्मनाऽऽत्मानं संयच्छति च पाति च । आत्मनि चैवं विचित्राश्च हि'** इत्यादिभिः श्रुतिस्मृतिसूत्रैः सोऽयमुपपाद्यते । न तावता तदर्थप्रामाण्यं श्लथीभवति । अन्यथा तु तत्तद्वचनानामप्रामाण्यलक्षणो व्याकोपस्तादृशः प्रसजेत् । श्रौताग्रपदतात्पर्य्यन्तु विद्वन्मण्डनसुवर्णसूत्रादिषु सुव्यक्तमिति नेह वृथाऽनूद्यते । तथाच सुसिद्धमेतत्—यत्तावल्लोकदृष्टप्रक्रियया नोपपद्यते ब्रह्मणो जगदभिन्ननिमित्तोपादानकर्तृत्वं तदात्मना परिणामित्वञ्च । प्रत्युत वेदैकदृष्टप्रक्रिययैवेति ।

१० इत्थञ्च नित्यनिर्दुष्टाद्भुताचिन्त्यनिरङ्कुशनिरतिशयैश्वर्यशालिनो निरस्तसाम्यातिशयस्वाभाविकानन्तविचित्रशक्तिमतो ब्रह्मणः स्वाभिन्ननिमित्तोपादानजगदात्मना प्रत्यादिष्टदेशकालाद्यपेक्षस्य परिणामस्य समस्तस्वेतरविजातीयतया प्राकृतेतरधर्मत्वादप्रत्यादिष्टदेशकालाद्यपेक्षाणां प्राकृतपरिणामानां विकारित्वप्रयोजकतानियमाङ्गीकारेऽपि न विकारित्वाधायकत्वं सम्भवदुक्तिकम् । अन्यथा परमाप्ततमस्य वेदस्य अप्रामाण्ययोगात्परिणामित्ववद्विका-

रित्वमपि ब्रह्मणस्तेनोपपादनीयम् । न तूपपादयति । न च निमित्तमिह पर्य्यालोचयन्तोऽप्यसम्भवादन्यत्किमप्युपलभामहे । सम्भवद्धि प्रतिषिध्यते नाऽसम्भवदिति नापि तत्प्रतिषेधति । न किल सिकतासु तिलस्नेहासद्भावमुपवर्णयितुं कमप्यायस्यन्तं साक्षात्कुर्मः । नन्वप्राकृते ब्रह्मण्यसम्भवन्तोऽपि स्थौल्यादयः प्राकृतधर्माः किं प्रतिषिध्यन्ते—**'अस्थूलमनणवह्रस्व'** मिति? सत्यं प्रतिषिध्यन्ते । प्राकृतमतीनां साजात्यावगाहिनीं ब्रह्मकिंरूपतानिश्चयवञ्चितां बुद्धिमभिपततां तेषां तदिदंरूपतानिश्चायनाय स्वरूपलक्षणवाक्यैः प्रतिषेद्धव्यत्वात् । तत्प्रवृत्तेस्तादर्थ्यात् । अन्यथाऽऽपार्थ्यप्रसङ्गात् । सकृदवधारिततत्तथास्वरूपाणाञ्च न तत्र कुतोऽप्यर्थे विचिकित्सापारवश्यमुपपद्यते । तत एव **'तदात्मानꣳ स्वयमकुरुते'**ति श्रुतिस्तत्र विकारित्वापत्तिसंशयासम्भवमाशय्य परिणाममात्रं प्रतिपादयति । कर्तृत्वकर्मत्वयोर्विरुद्धधर्मयोश्चैकाधिकरण्यप्रतिपादनमुखेन ब्रह्मणोऽप्राकृतत्वं प्रकाशयन्ती तदेवोपष्टभ्नाति । यत्त्वात्मकृतिसूत्रे **श्रीमद्रामानुजभाष्यम्**—**'अविभक्तनामरूप आत्मा कर्ता, स एव विभक्तनामरूपः कार्यमिति कर्तृत्वकर्मत्वयोर्न विरोध'** इति । तन्न विमर्शसहम् । तदात्मशब्दयोरभिन्नार्थपर्य्यवसायित्वादेकस्यैव कर्तृत्वकर्मत्वावगमात् । न च तादृशनामरूपवैशिष्ट्येन भेदः शक्यकल्पनः । तादृशार्थपर्य्यवसायिस्ववाचिन आत्मशब्दस्य प्रयोगायोगात् । नच बिम्बादर्शे पश्याम्यात्मानमिति प्रतीयमानयोरेकस्य दृश्यत्वद्रष्टृत्वयोर्विरोधमाशङ्क्य यथा बिम्बप्रतिबिम्बपुरुषयोर्भेदाश्रयणेऽप्यात्मशब्दप्रयोगस्तथेहाऽप्योङ्कारे न दोष इति वाच्यम् ।

दार्ष्टान्तिकस्य जगतस्तद्भिन्नत्वापत्त्या कण्ठे कुठारपातात् । तद-नन्यत्वाद्यधिकरणभाष्ये श्रीमद्रामानुजाचार्य्यैर्जगतो ब्रह्मानन्यत्व-स्यैव स्वीकारात् । सर्वविज्ञानवचनव्याकोपप्रसङ्गात् । दृष्टान्तेऽपि भेदस्याऽनैकान्तिकत्वाच्च । अन्यथा परप्रतिबिम्बं पश्यतोऽपि तथाऽनुव्यवसायप्रसङ्गात् । नापि भेदाभेदः सुकरप्रतिपत्तिः । घट्टकुटीप्रभातापातात् । स्वमतव्याकोपविप्लवप्रसङ्गाच्च । तत्कृतं भेदकल्पनया । युज्यते चेदम् । इह यथाकथाच भेदोत्तम्भनेन सिद्धेऽप्यविरोधे **'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यदि'** ति श्रुतिलब्धयोर्दृश्यत्वद्रष्टृत्वयोर्विरुद्धधर्मयोर्ब्रह्मणि सामानाधिकरण्य-स्याऽप्रत्याख्येयतया बलवत्तस्याऽप्राकृततां प्रतिपद्यैव विरोधस्य परिहर्त्तव्यत्वात् ।

११ तदेवं, वक्ष्यमाणप्रकारेण च तादृशस्य देशकालाद्यपेक्षा-शून्यस्य परिणामस्य विकारानाधायकत्वे प्रतिष्ठितेऽपि, मा ता-वत्प्रभूवन्ननाघ्रातनिगमागमसौगन्धिकगन्धानामपरिचिताचिन्त्यार्थ-मीमांसामर्य्यादानामर्वाचीनविकल्पविचारकुतर्कप्रमाणाभासशास्त्रक-लिलान्तःकरणदुरवग्रहवादिनामवधीरितबुद्धिशुद्धीनां जातुचिद-चिन्त्यार्थविप्लवप्रधानफला वादप्रसराः शुद्धास्तिककुलप्रसूतीनां व्यामोहायेत्यभिप्रयन्ती श्रुतिर्जगदात्मना ब्रह्मपरिणाममाम्नाय तद-व्यवहितं तादृशमनन्यशक्यं परिणमतो ब्रह्मणः सर्वसामर्थ्यमश्लथं सूचयितुमप्राकृतत्वं श्रावयति । **'तस्मात्तत्सुकृतमुच्यत इति'** इति । यदाहुः **श्रीमदाचार्य्यपादाः** प्रतिज्ञादृष्टान्तानुपरोधा-धिकरण आत्मकृतेः परिणामादिति सूत्रे–**'सुकृतत्ववचना-च्चाऽलौकिकत्वम्'** इति ।

१२ अलं पल्लवमालम्ब्य । तैत्तिरीये 'सोऽकामयते' त्युपक्रम्य 'तस्मात्तत्सुकृतमुच्यत इति' इत्युपसंहृतं सर्गप्रकरणं कृत्स्नमपि ब्रह्मणः प्राकृतेतरपरमैश्वर्य्यपर्य्यवसायि । तथाहि–'इदꣳ सर्वमसृजते' ति श्रुत्या 'नास्त्यन्तो विस्तरस्य मे' इति विस्तरानन्त्यादुद्देशतः सङ्कीर्तनानर्हत्वादिदमा निर्दिष्टं सिसृक्षितं निखिलमपि तत्तत्प्रातिस्विकनामरूपं वस्तुजातं 'बहु स्या' मिति बहुभवनद्वारा विषयीकुर्वाणा 'सोऽकामयते' ति श्रूयमाणा ब्रह्मणः कामना, स्वस्या ज्ञानपूर्वकत्वनियमादन्यथा तत्तदर्थविषयीकारायोगात्स्वसम्बन्धिनः सर्वज्ञत्वसूचनात्तदितरसर्वज्ञाभावादन्यत्राऽसम्भवात्तत्तत्सृष्टपदार्थसार्थस्य तत्तदुद्देशेनाऽशक्यसङ्कीर्तनत्वेऽपि तदितरतद्वैलक्षण्यायाऽव्यभिचरितफलत्वं प्रदर्शयितुं 'तदनुप्रविश्य । सच्च त्यच्चाऽभव' दित्यादिना सङ्गृह्य बहुभवनवचनात्स्वाप्तपदार्थवत्तत्तदर्थानामसत्यत्वनिरासापदेशेन 'यदिदं किञ्च । तत्सत्यमित्याचक्षत' इति विशिष्य सत्यत्वसमर्थनाच्चाऽप्राकृतो धर्मः । तथाच श्रुत्यन्तरम्–'सत्यकामः सत्यसङ्कल्प' इति ।

१३ जगदैकरूप्यनिरवयवत्वव्याहतिवैषम्यनैर्घृण्यादिदोषाणां व्युदासाय 'स तपोऽतप्यत । स तपस्तप्त्वे' ति सर्वस्याऽऽलोचनपुरस्सरत्वप्रदर्शनादवाणिभणितं संस्फुटीभवत्तत्तद्दोषप्रसक्तिप्रतिबन्धकस्वाभाविकाद्भुताचिन्त्यानन्तशक्तिमत्त्वञ्चाऽप्राकृतो धर्मः । तथाच श्रुत्यन्तरम्–'यः सर्वज्ञः सर्वशक्ति' रिति । तत्तत्प्रतिनियतनामरूपपदार्थसमष्टिरूपजगदात्मना परिणामेऽपि ब्रह्मणो निरवयवत्वव्याघाताभावादविकारित्वं ततो गम्यमानं वि-

रुद्धधर्माश्रयत्वञ्चाऽप्राकृतो धर्मः । तादृशाप्राकृतधर्माश्रयस्याऽऽप्तकामस्याऽपि तस्योदाहृतश्रुत्यन्तरैकवाक्यतया प्राकृतपृथ्वीपरिवृढानामिव लैलैकफलेन तादृशाभिनिवेशेन स्थिरीभवन्नित्यनिर्दुष्टाद्भुताचिन्त्यनिरतिशयनिरङ्कुशैश्वर्य्यशालित्वमप्यप्राकृतो धर्मः ।

१४ इत्थञ्च विश्रुतश्रुतिसीमन्तिनीसरस्वतीसंस्तुतस्य ब्रह्मणस्तत्तादृगपरिच्छिन्नाचिन्त्याद्भुताऽप्राकृतधर्मवत्त्वस्य विशदविस्वरनिस्तुलयशश्शब्दाभिलप्यत्वात्तत्प्रतिपादकस्य श्लोकस्य—'तदप्येष श्लोको भवती'ति सावतरणम्—'**असद्वा इदमग्र आसीत्ततो वै सदजायत। स आत्मानँ स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत इति**' इति सत्तानिदर्शनात्तादृशार्थप्रामाण्याय प्रमाणतयोदाहरणात्तर्कानालम्बितकेन तादृशप्रमाणप्रतिपत्त्या च तत्तादृगचिन्त्यार्थानां नित्यनिर्दुष्टापौरुषेयशब्दप्रमाणकत्वप्रतिबोधनाच्च तस्य तत्तथासिद्धं परिणामित्वेऽप्यविकारित्वं विरुद्धधर्माश्रयत्वञ्च सिद्धमव्याहतमव्याहतञ्च व्याहतवादावसरम् ।

१५ स्थाने चैतत् । तादृशदिव्यापौरुषेयनित्यनिर्दुष्टशिष्टतमशब्दसिद्धस्याऽचिन्त्यार्थस्य तत्तत्तार्किककोविदाग्रेसरोक्तिसिद्धयत्स्वाभासताप्रतिपन्ननित्यानन्तदोषविषमूर्छिताभिर्युक्तिभिः सर्वथाऽप्यसम्भवदन्यथाभावत्वात् । शास्त्रञ्च तदनादरणीयतामनुशास्ति—'**नैषा तर्केण मतिरापनेया। तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः। तर्कोऽप्रतिष्ठः स्मृतयो विभिन्नाः। अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्**' दिति ।

१६ युज्यते चैतत् । यदाहुः श्रीमद्भारतमार्तण्डमहर्षीत्याद्य-

नेककीर्तिपदपदावलीविलासिनीसंवाहितपादा भट्टश्रीगोवर्द्धन ( गङ्गूलालजी ) वेदान्तभट्टाचार्य्यपादाः—'यद्ग्राहकं यत्प्रमाणं तेन निश्चिते तस्मिन्न केवलयुक्त्या तद्धर्मस्य तत्स्वरूपस्य वा बाधः कर्तुं शक्यः। यथा रूपरहितेष्वाकाशादिषु स्पर्शाभावेन स्पर्शवत्सु पृथिव्यादिषु रूपसत्त्वेन च वायौ स्पर्शवत्त्वे रूपराहित्यं तद्राहित्ये स्पर्शवत्त्वं वा न स्यादित्यशक्यशङ्कम्। मतभेदात्प्रत्यक्षेणाऽनुमानेन वा तत्र तथात्वस्य निश्चया' दिति।

१७ तत एव विद्वन्मण्डनसमाप्तौ मायावादिव्याजेन लोकदृष्टप्रक्रियावादिनोऽधिक्षिपन्तः श्रीमत्प्रभुचरणाः प्राहुः—'तस्मादस्माभिरेवोक्तपद्धत्या श्रुतिसिद्धया। ज्ञात्वा ब्रह्मस्वरूपन्तत्प्राप्त्यै तद्भजताऽखिलाः। येषां लौकिकमेव मानमधिकं वेदादितोऽलौकिकात्तत्पादानुगतस्तदर्थ इति च प्रच्छन्नबौद्धास्तु ते। येषां तद्विपरीततैव विदुषां केषाञ्चिदन्तर्गता तेषामेव मुदेऽस्तु मत्कृतिरियं गोपीशसंसेविनाम्। वरीवर्त्ति श्रद्धा श्रुतिषु यदि वा व्यासवचने तदा विद्वांसोऽस्मद्विरचितमिदं मण्डनवरम्। यथोक्तं कण्ठे वा शुकवदथवाऽर्थञ्च हृदये मुदा कृत्वाऽऽयत्तं धुनुत रिपुपक्षाभिधतम' इति। इति।

१८ एष निष्कर्षः—'न खलु लोके साक्षात्परिणमन्नविकृतः कोपि पदार्थो दृष्टः। दृश्यते च परिणमतां विकारित्वं लोक' इति भवत्पाणितूलिकाशिल्पावगतेन साहचर्य्यनियमेन प्राप्ता—'ब्रह्म

विकारि। परिणामित्वात्। मृत्पिण्डवदि' त्येषा प्रत्यादेश्या तावदनुमितिः। तथाहि—परिणामस्तावदिह लिङ्गम्। लिङ्गत्वञ्च व्याप्तिवैशिष्ट्ये सति पक्षधर्मत्वम्। व्याप्तिश्च हेतोरव्यभिचरितसाध्यसामानाधिकरण्यम्। तथाच परिणामस्य मृत्पिण्डादावव्यभिचरितं विकारसामानाधिकरण्यं दृष्टवतो, ब्रह्मणि तच्छ्रवणात्तत्स्मरतश्च सुलभा विकारित्वानुमितिरित्येतदभिप्रेतं भवतः। एतदुपरिष्टात्परीक्षिष्यामहे। इदम्पुनर्ब्रूमः—निरक्षरक्षोभमेतदभ्युपगमेऽपि लोकदृष्टप्रक्रियापक्षपातस्तावद्भवतः परिहीयत इति। घटादौ परिणामस्येव विकारस्याऽपि चाक्षुषत्वात्तयोरभिन्नप्रमाणावसेयताया लोकदृष्टत्वात्। इह च शब्दावसितेन परिणामेन विकारमनुमिन्वता तद्विरुद्धप्रक्रियाया उपाश्रयणात्। वह्निधूमयोर्महानसादौ भिन्नाभिन्नप्रमाणावसेयत्वन्तु शक्याभ्युपगमम्। लोकदृष्टत्वात्। अदृष्टचरन्तु लोके परिणामविकारयोरेवं भिन्नाभिन्नप्रमाणावसेयत्वम्। तथाच तदङ्गीकुर्वतः सुदुर्निरस एव लोकविरोधः।

१९ ननु जातो घट इत्युपशृण्वता तयोरपि भिन्नप्रमाणेन ग्रहणान्न लोकेऽपि तादृशो नियम इति चेत्? नन्विदं शरपुरुषीयं सम्पन्नम्। अनुज्झितचक्षुरादिप्रमाणप्रतिपत्तियोग्यताकस्य परिणामस्य शब्दानुभवविषयत्वे विकारस्याऽनुमितिविषयत्वेन तयोर्भिन्नाभिन्नप्रमाणावसेयतासिद्धिसत्त्वेऽपि निरस्तसमस्तप्रमाणप्रतिपत्तियोग्यताकस्य शब्दानुभवमात्रविषयस्य ब्रह्मणः परिणामस्य प्रत्युत लोकविरुद्धत्वसिद्धेः। तदितोऽपि तादृशः पक्षपातः सुदुर्निर्वोढ एवेत्युभयतःपाशा रज्जुः। श्रुतिसिद्धमर्थं न लोकविरोधो बाधत इति चेत्? ननु तर्हि तथासिद्धमेव परिणामित्वेऽप्यविकारित्वं

ब्रह्मण्यभ्युपगच्छत्सु शुद्धाद्वैतसिद्धान्तिषु कुतः शिरसि शूलमुत्कोपयति भवतो लोकविरोधः? तदलं दुर्व्यवसितेन।

२० वस्तुतस्तु—चक्षुरादिग्राह्यस्य परिणामस्य सम्भवति मानान्तरावसेयत्वे यथा मानान्तरावसेयत्वं विकारस्य, तथेहाऽपि शब्दमात्रग्राह्यस्य परिणामस्य सम्भवति मानान्तरावसेयत्वे काममङ्गीक्रियतां विकारस्याऽनुमानावसेयत्वम्। किन्तु तदसम्भवे तथाऽङ्गीकारः प्रसञ्जयत्येव सुदुष्परिहरं लोकविरोधम्। तदयमर्थशून्य एव प्रकृते नियमव्यभिचार इत्यपाणिपिहितम्। नच शब्दानुभवविषयीभूते परिणामे विकारस्याऽनुमितिविषयताया लोकदृष्टत्वात्तावन्मात्रमादृत्याऽनुमिन्वतो मे न लोकविरोध इति वाच्यम्। विनिगमनाविरहात्। अस्माकन्तु भवदभ्युपगता लोकदृष्टप्रक्रियैवाऽस्तु मानम्। तदेष सर्वथाऽपि नाऽपजहाति भवन्तं स्नेहसंवर्द्धितो लोकविरोध इत्यलमायासेन।

२१ अथवा तुष्यतु भवान्। अन्यतश्च प्रसजन्ति भूयांसो दोषाः। तथाहि—'**तत्तादृशजगदात्मना ब्रह्मणः परिणामो न विकारव्याप्यः। परिणामत्वव्याप्यजातिमत्त्वे सति शब्दानुभवमात्रविषयत्वात्। प्रत्यादिष्टदेशकालाद्यपेक्षत्वात्। तस्य तद्वृत्तित्वेऽपि तत्तादृशाद्भुतानन्ताप्राकृतधर्माश्रयतायास्तत्र श्रुत्योपदेशात्। यदेवन्तदेवम्। तस्यैवेच्छापरिणामवत्। यन्नैवन्तन्नैवम्। पृथुबुध्नोदराद्यात्मना मृदादिपरिणामवत्। यदेवन्तदेवम्। व्योमवत्। यन्नैवन्तन्नैवम्। पूर्ववत्। यदेवन्तदेवम्। मायामत्स्यविडम्बनवत्। यन्नैवन्त-**

न्नैवम् । इतरवदि' त्यनुमितेस्तत्परिणामस्य विकारव्याप्यत्वा-भाववत्ताया दुरपन्हवत्वाद्व्याप्यविशिष्टस्य तस्य लिङ्गत्वायोगस्तत एव स्फुटं व्याप्यत्वासिद्धत्वं कालात्ययापदिष्टत्वं सत्प्रतिपक्षत्वञ्चेति । तथाचाऽसम्भवदुदयत्वादकिञ्चित्करत्वाच्च सर्वथाऽपि सेयं प्रत्यादेश्या ।

२२ व्याप्तिञ्च न गृह्णीमः । यश्च व्याप्तिसंवेदनभूमिः पिण्डो दृष्टान्तितो, यत्किञ्चिद्वा दृष्टान्त्येत, व्यामोहवेल्लितमेव ननु तत् । न हि तत्तत्प्रतिनियतनामरूपपदार्थसमष्टिरूपजगदात्मानं निरुक्तं वा परिणामं केवलमपि कुत्रचिदुपलभामहे । किम्पुनरव्यभिचरितविकारसहचरितम् ।

२३ अयमाशयः—परिणामिनः सर्वज्ञत्वाद्यभ्युपगमेन प्राकृततां परिहरतः परिणामस्याऽप्राकृतता तावद्भवतोऽप्यभिमता । 'यद्यपि सर्वज्ञं सर्वशक्तं ब्रह्म जगद्रूपेण परिणमत इति युक्त' मित्यादितः स्वयं वचनात् । अन्यथा सर्वज्ञसर्वशक्तपदयोरापार्थक्यप्रसङ्गात् । तथाच तदनुरोधादुत्तरत्राऽपि लिङ्गस्य परिणामस्याऽप्राकृतता स्वयमेवाग्व्यापारमभिव्यक्ता । तस्य पक्षधर्मत्वेऽपि व्याप्तिवैशिष्ट्यं ननु भवता प्रतिपादितव्यम् । अन्यथाऽनुमापकत्वासम्भवात् । प्राकृतञ्च परिणामं विकारेणाऽव्यभिचरितसाहचर्य्यं पश्यामस्तत्तन्मृत्पिण्डादिपदार्थेषु न पुनरेनम् । यदि कुतोऽपि तत्राऽन्वभविष्यत सर्वज्ञता च सर्वशक्तिमत्ता च, तर्ह्यनेनापि ननु समभविष्यत । तदेकहेतुकत्वादेतस्य । न तु सा तत्राऽनुभूयते । तत्स नाऽयम् । तथाच न व्याप्तिग्रहः । नचाऽन्यत्र परिणामेषु विकारव्याप्यतायाः सत्त्वादिहाऽपि तत्सत्ता मन्तव्येति राजनिर्देशः । अन्यत्र सत्ताया इतरत्र

सत्त्वाहेतुत्वात् । न हि दन्तिनो मिथुनसृष्टा इत्यश्रमातङ्गोऽपि मिथुनसृष्टः शक्यते केनापि वक्तुम् । ननु शक्यत एव वक्तुम् । यदि तस्य तथात्वं प्रमाणसिद्धम् । नच ब्रह्मणस्तथा परिणामस्य प्रत्युत विकारव्याप्यत्वाभाववत्ता प्रमाणसिद्धेति वाच्यम् । परिणामत्वव्याप्यजातिमत्त्वेन विकारव्याप्यत्वसाधकेन सत्प्रतिपक्षादिति चेत् ? नैवम् । प्रयोजकाभावात् । अस्माकम्पुनस्तथात्वे सति शब्दानुभवमात्रविषयत्वादेरेवाऽनुकूलतर्कत्वात् ।

२४ किञ्च । विकारस्य प्राकृतधर्मत्वादखिलप्राकृतप्रत्यनीके तत्तादृशाद्भुतानन्ताप्राकृतधर्माश्रये ब्रह्मणि तत्तादृशजगदात्मना साक्षात्परिणामेन तत्सिद्धेस्तदप्राकृतत्वभङ्ग इत्यनुमिन्वतो ननु भवतो मनोगतम् । अन्यथा तस्याऽदोषत्वात्तथा सायासं साधयतः किम्फलाकाङ्क्षाया अनुपशमात्प्रमत्तपदाभिलप्यत्वापत्तेः । यस्य कस्यापि तदितरस्य तत्तत्प्रतिनियतनामरूपपदार्थसमष्टिरूपजगदात्मना परिणन्तुमशक्यत्वे, ब्रह्मणश्च शक्यत्वे, किन्निमित्ताकाङ्क्षामपनेतुं सर्वज्ञसर्वशक्तपदाभ्यां विशेषितत्वादप्राकृतत्वञ्च तस्य भवता प्रथमतः स्वीकृतम् । तथाच सर्वज्ञत्वसर्वशक्तिमत्त्वयोस्तादृशाचिन्त्यपरिणामहेतुत्ववत्तद्विकारव्याप्यत्वाभाववत्ताहेतुत्वस्याप्यभ्युपगन्तव्यत्वं सुदुष्प्रतिरोधम् । नच तयोस्तन्मात्रहेतुत्वं शक्याश्रयम् । मानाभावात् । प्रतिषेधति च तत्र प्राकृतधर्माञ्छ्रुतिः—**'अस्थूलमनण्वि'ति** । अन्यथा—**'यः सर्वज्ञः सर्वशक्ति'** रिति श्रुतिश्च व्याकुप्येत । परिणमतो ब्रह्मणो विकारित्वापत्तौ तत्प्रतिबन्धकशक्त्यभावसिद्धेः सर्वेति विशेषणस्य सुदुरुद्धरवैयर्थ्यात् । तथाच ब्रह्मणस्तत्तादृशजगदात्मना परिणामस्य विकारव्याप्यत्वाभाववत्त्व-

मवश्यमभ्युपेयम् । तन्न व्याप्तिग्रहः । ततश्च सुदुष्प्रतिरोध एतस्याः प्रत्यादेशः। तादृशस्खलेखानादरेण सम्भवन्व्यतिरेकव्याप्तिग्रहश्च तत एव दुष्टः प्रत्यादिष्टश्च । इति ।

२५ नच स्वबुद्धिवैयाकुली मामित्थं निरग्राहयदित्यन्तर्निर्वेत्तव्यम् । तथा स्वयमनभिवदताऽपि, ब्रह्मणि परिणाममभ्युपगम्य दूषयता पुरुषेण तत्तादृशाचिन्त्यस्य तस्य निर्हेतुकत्वे साधारण्याकुतोभावप्रश्नप्रसङ्गस्य सुदुष्प्रतिषेधतापत्तेस्तद्धेतुतया सर्वज्ञत्वसर्वशक्तिमत्त्वयोरशब्दमभ्युपगन्तव्यत्वात् । यस्तु न स्वयं किञ्चिदभ्युपगच्छति, केवलन्तु परमतसिद्धं परिणाममात्रमापाततः सिद्धं प्रतिपद्य दूषणमाचष्टे, नूनमविदितवादयाथात्म्यतयोपेक्ष्यः स निर्भिन्नमर्य्यादः । तावन्मात्रस्य तथा प्रतिपत्तौ मानाभावात् । यद्धि यन्मतसिद्धं येनाऽभ्युपगम्य दूषणं प्रसिसङ्क्षयिष्यते, तेन तन्मतसिद्धं तत्स्वरूपमपि ननु साभिनिवेशमवबोध्यम् । अनेवङ्कारे पुनरनाकर्णितकेन किमप्यबद्धमाक्रन्दति तत्र पिशुनत्वं प्रतारकत्वं पुरोभागित्वं प्रमत्तत्वं प्रेक्षावदुपेक्ष्यत्वञ्च युगपत्सुदृढं प्रसजेत । तथाच तत्र प्रश्नस्याऽनवसरपराहतत्वसिद्धेः प्रसजद्बाह्यत्वमुपेक्ष्य तत्तादृशनित्यनिर्दुष्टशिष्टतमशब्दानुशिष्टस्य तस्यैवाऽनभ्युपगमे तादृश्या अनुमितेरनवसरपराहतत्वसिद्धेश्चेत्युभयतोऽपि मतस्याऽस्माकमनाकुलत्वं सुस्थिरम् ।

२६ कृत्स्नमप्येतदविमर्शमधुरम् । लोकदृष्टप्रक्रियामविमृश्य मधुराममिमन्यमानं तत एव दुर्ग्रहगृहीतां तामपरिहरन्तं भवन्तमनुरुध्यैव तादृशानुमानस्य स्वीकारात् । वस्तुतस्तु—प्रायस्तत्तादृशनित्यनिर्दुष्टशिष्टतमशब्दसिद्धानामेवाऽर्थानां साध्यसाधनत्वात्तादृशा-

मेव च तेषां पक्षसाध्यत्वादनुमानस्याऽपि तदुपजीव्यत्वसिद्धेस्त-त्सिद्धानामर्थानां निखिलप्रमाणातिरिक्तदिव्यापौरुषेयनित्यनिर्दुष्टशब्दप्रमाणावसितत्वं प्रक्रियान्तरस्य च बोधसौलभ्यमात्रपर्य्यवसितत्वमित्येव सुव्यवस्थम् । एतेन तत्र हेतुभूतेषु तत्सिद्धेषु तत्तदर्थे प्रत्यवस्थानावसरः परिहृतः । यदि पुनर्लोकप्रक्रियामात्रेण भवति स्मानविकारित्वसाधनं पर्य्यनुयुङ्क्ते, ननु तर्हि वयमपि तादृशः सति याश्रयणेन तत्तादृशजगदात्मना परिणामस्य ब्रह्मणि साधनं पर्य्यनुयुञ्ज्महे । अतथासिद्धश्च न विकारलिङ्गं स सम्भवति कि त-कारवत्तस्याऽप्यसिद्धत्वात्साध्यसमत्वेन दुष्टत्वात् । यदाहु साक्षा-**सिद्धः साध्यतुल्यत्वाद्धेतुः साध्यसमो भवेत्** भवत इति। तथाच सर्वथाप्येषा प्रत्यादेश्या सिद्धा । इति । कि

२७ अभ्युपगमसिद्धान्तेन प्रपञ्चितमिदम् । वस्तुतस्त्व स्या-र्णिताया गन्धर्वगीतेर्वैस्वर्य्यशंसनमपरिचितपरिणामविकारयाथात्म्ता डिम्भमण्डलमण्डलीताण्डवस्य च डिण्डिमताडितकमेतद्यदुत भवतस्तथानुमानम् । अवधारिततदुभययाथात्म्येन प्राकृतस्यापि परिणामस्य, क्वाचित्क्या अपि विकारेण सहचरिततायाः सम्भवदुक्तिकत्वाभावात् । तथाहि—मृत्प्रभृतीनां दुग्धप्रभृतीनाञ्च द्रव्याणां पृथुबुध्नोदरत्वादेरम्लत्वघनत्वादेश्च परिणामाद्विकारं नाम न किञ्चिदितरदुपलभामहे । षडेव च विकारा भगवता **वार्ष्यायणिना** परिगण्यन्ते । यदि पुनरस्त्यादिवत्स्वतन्त्रं विकारो नाम किञ्चिदभविष्यत्किन्तर्हि स तावत एव तान्पर्य्यगणयिष्यत् । तत्र 'जायत' इत्याख्याता तावदुत्पत्तिरेव चाऽयं परिणामः । '**मृत्परिणमत**' इति तत्तत्पृथुबुध्नोदरत्वाद्यात्मना मृदः कारणद्र-

च्यस्याऽवस्थारूपोत्पत्तेराश्रयताया एव प्रत्ययात् । तथाच य एष परिणामः स एव कामन्तत्र विकारेष्वन्यतमत्वाद्-भिलप्यतां विकारपदेन, न तु ततः किञ्चिद्भिन्नन्तत्र दृश्यते यदुत विकार इत्याख्यायताम् । तदेकमेव तत्रोपलभ्यत इत्यनायास-निर्य्यासि । भवितव्यन्तु साहचर्य्यमातिष्ठमानेनोभयेनाप्युपलभ्य-मानेन । नहि स्वं स्वेन किमपि सहचर्य्यते, स्वेन वा स्वं साध्यते। नहि पाणिः पाणिना सहचर्य्यते, पाणिना वा पाणिः साध्यते । यदि सिद्धमिदंवृत्ति पाणित्वं किन्तर्हि सिसाधयिषितम्? बाधश्च सिद्धसाधनञ्च प्रसजतः । यदि पुनरसिद्धन्तत्? स्वरूपासिद्धिश्च साध्यसमत्वञ्चेति । वस्तुतः पुनर्द्वैत एवेदमपि संघटते । तथाच काचित्कस्यापि साध्येन तत्साहचर्य्यस्याऽसम्भवात्तथाभूतमेव तत्।

२८ नच द्वयत्वाभावात्परिणाम एव ब्रह्मणि विकार इति वा-च्यम् । वृश्चिकभिया विद्रुतस्य विषविषमाशीविषवदनमभिनिवि-शमानस्याऽनुक्रियापातात् । नन्वङ्ग तत्कृतमपह्नवपाण्डित्यप्रका-शेन । भवतैव ननु तयोर्द्वयता साहचर्य्यावगमकवाक्येन स्वाभि-मता प्रकाशितेति । नच न तद्वाक्यं साहचर्य्यमवगमयतीति वक्तव्यम् । लोकनिदर्शनस्याऽनौपयिकत्वप्रसङ्गात् । '**तथापि ब्रह्मणो जगद्रूपेण परिणामाङ्गीकारेऽपि विकारित्वं यथा नापद्येते**'त्यादेः—'**यथा च ब्रह्मणो जगद्रूपेण परि-णामाङ्गीकारेऽपि न विकृतत्वापत्ति**' रित्यादेश्च स्वलेखस्य दत्ततिलाञ्जलित्वापाताच्च । नच सर्वमपि तथातात्पर्यकमिदम् । लोकनिदर्शनम्पुनः श्रुतिसिद्धमर्थमुपष्टम्भितुमिति शक्यवचनम् । इत्थं विवक्षायान्तयोः प्रकाशमद्वयताया एव प्रतिपाद्यत्वात् । तथा

प्रतिपादने बाधकाभावात् । वस्तुतः पुनर्विकारापत्तिभयात्स्वसिद्धान्ते, विशेष्यभूतेश्वरस्वरूपे साक्षात्परिणाममनभिप्रयता, विशेषणभूताचिदंशे च तमभ्युपगम्य सद्वारकस्याऽपि तस्य परम्परया ब्रह्मवृत्तित्वं, प्रोक्षणावहननादिदृष्टान्तेन मुख्यत्वञ्चाऽकुण्ठकण्ठक्रममङ्गीकुर्वता, तयोरद्वयत्वे, शिरोवेष्टनेन प्राणायामायासमनुभवताऽपि भवता ननु तदेवाऽऽपादितं यदुत परत्राऽऽपिपादयिषितम् । तथाच–'**यत्रोभयोः समो दोषो न तत्रैकश्चोद्यो भवती**'ति न्यायात्तादृशश्चोद्यमप्यनवसरपराहतम् । प्रतिज्ञाहानिश्च । प्रतिजानीते हि भवान्यदुत तत्तादृशजगदात्मना ब्रह्मणि परिणामेऽभ्युपगतेऽपि न विशिष्टाद्वैते तस्य विकृतत्वापत्तिरिति ।

२९ एष पुनः **सिद्धान्तः**–ग्राह्यत्वाग्राह्यत्वाभ्यां विकारो द्वेधा । परिणतस्याऽनुदितपुनःकारणभावप्रतिरोधिधर्मान्तरत्वं ग्राह्यत्वम् । कारणात्कार्य्यस्य भेदानापादकत्वमिति यावत् । तद्भिन्नञ्चाऽग्राह्यत्वम् । यश्च ग्राह्यो विकारः स परिणाम इत्यभिलप्यते । यश्चाऽग्राह्यः स विकार इति । तस्यैव तात्त्विकत्वात् । ततश्च प्राञ्चः प्राहुः–'**अन्यथाभावः परिणामः । तात्त्विकोऽन्यथाभावश्च विकार**' इति । पूर्वत्राऽतात्त्विकपदानुपादानन्तु मिथ्यावादिनां विवर्त्तलक्षणतो विलक्षणतोपदर्शनाय । तत्पदन्तत्राऽभिनिवेशयतान्तेषां कार्य्यत्वबुद्धेरवास्तवत्वे तात्पर्य्यात् । प्रपञ्चसत्यत्ववादिनामस्माकम्पुनस्तथा तदभावात् । वस्तुतस्तु तदभिनिवेशेऽपि न किञ्चित्क्षीयते । अतात्त्विकत्वं ग्राह्यत्वञ्चेत्यनर्थान्तराभ्युपगमात् । अग्राह्यविकारे परिणामपदप्रयोगस्तु द्रव्यान्यथाभावमात्राभिप्रायेण ।

३० आद्यश्च विकारस्तत्तादृशजगदात्मना परिणते ब्रह्मणि। यथा—घटकटककटाहादिरूपेण परिणतेषु मृत्सुवर्णकृष्णायसप्रभृतिषु। घटाद्यवस्थेषु मृदादिषु पुनः कारणभावप्रतिरोधिधर्मान्तरानुदयात्। तत एवोपमर्दिता घटादयः पदार्थाः पुनः कारणभावमापद्यमानाः साक्षात्क्रियन्ते। तत्तद्द्रव्यार्थिना च सर्वोऽपि तत्तद्विकारोऽविशेषात्स्वीक्रियते। व्यपेतव्यामोहं वीक्ष्यते किल विपुलसुवर्णार्थी पण्यवीथिकासु कटकरुचकस्वस्तिकादीनि निर्विशेषं गृह्णान इति। अभेदश्च कार्य्यकारणयोः प्रतीयते—‘सुवर्णं स्वस्तिक’ मिति। दध्नि पुनर्नैष विकारः। तथावस्थे पयसि पुनःकारणभावप्रतिरोधिघनत्वाम्लत्वादिधर्मान्तरोदयात्। तत एव दधि न पुनर्दुग्धञ्जायमानं दृश्यते। नच दुग्धार्थिना जातु गृह्यमाणन्दधि विलोक्यते। नापि तयोरभेदः प्रतीयते—‘दुग्धं दधी’ ति। तथाच तत्र विकारपदाभिलप्योऽग्राह्य एव विकारः। तत एव तत्रभवान् **श्रीकृष्णद्वैपायनपरमाचार्य्यः** प्रतिज्ञादृष्टान्तानुपरोधाधिकरणचतुर्थसूत्रे **परिणाम**पदमभिन्यवीविशत्। अन्यथा सर्वसन्देहनिरसिसिषुः स आद्यविकारपदमेव प्रयुञ्ज्यात्।

३१ इत्थं प्रमासम्भवेऽपि प्रयोगसामान्यमात्रं विदुषां सुलभभ्रमवैभवानां भ्रमं निरसितुं आद्यो विकारस्तावदविकृतपरिणाम इत्यभिलप्यते, तद्भिन्नश्च विकृतपरिणाम इत्युच्यते। यदाहुर्वेदान्तचिन्तामणौ **भट्टश्रीगोवर्द्धनवेदान्तभट्टाचार्य्यपादाः**—

**‘विकृताविकृतत्वाभ्यां परिणामो द्विधा मतः। विकृतं सत्परिणमेत्कारणं कार्य्यरूपतः। न पुनः कारणात्मत्वं विकृतः सोऽभिधीयते। दुग्धाद्दधि यथा**

जातं पुनर्दुग्धं न जायते। कार्य्यात्मना परिणमेत्कारणन्त्वविकारि सत्। पुनः कारणरूपत्वमेषोऽविकृत उच्यते। नानाभूषादिरूपेण रजतं परिणामि हि। मध्ये तदेव चान्तेऽपि तत्पुनः स्याद्विलापने। असौ वेदान्तसिद्धान्तः शुद्धान्तःकरणप्रियः। परिणामो ह्यविकृतः साक्षाच्छ्रुत्यादिसम्मत' इति।

३२ ननु कथन्तर्हि पाणिं परिष्कर्तुं वलयमभिलष्यतः सुवर्णशकलञ्च पश्यतो 'नेदं वलयं सुवर्णमेतदि'ति भेदमुज्जीवयन्तो बुद्धिशब्दान्तरादयः। काणादाश्च तमेनमातिष्ठन्त इति चेत्? अत्राहुस्तदनन्यत्वसूत्रेण भेदवादनिराकरणमातिष्ठमानानां मायावादनिराकरणस्य च प्रासङ्गिकत्वं प्रतिपद्यमानानां श्रीमद्रामानुजाचार्य्याणां भास्कराचार्य्याणाञ्च मतं दूषयतां श्रीमदाचार्य्यपादानां तत्सूत्रीयं माननिदर्शनपरं भाष्यमुद्भासयन्तः श्रीमत्पुरुषोत्तमाः–'काणादैर्हि भेदवादोज्जीवनं, विलक्षणबुद्धिबोध्यत्वशब्दभेदकार्यभेदकालभेदाऽऽकारभेदोत्पत्तिविनाशप्रतीतिसंख्याभेदैः कारकव्यापारवैयर्थ्यापादनेन च केवलैस्तर्कैः क्रियते। तच्च विलक्षणबुद्धिबोध्यत्वादीनां पञ्चानामेकस्मिन्नपि पुरुषे बालयुवस्थविरादिदशादर्शनेनाऽभेदसाधकतया साधारणीकरणादुत्पत्तिविनाशयोश्च वृध्द्यादिवद्भावाऽवस्थान्तरत्वाभ्युपगमेन, बहवस्तन्तव एकः पट इति संख्याभेदस्याऽपि समुदायस्य कारणत्वाङ्गीकारात्तदभावेन तदनङ्गीकारे च कारणगुणानां कार्य्यगुणारम्भकत्वा-

त्कार्य्ये बहुत्वापत्त्या, द्रव्यगतावस्थानां कारकव्या-पारजन्यतया कारकव्यापारवैयर्थ्येनिरासेन च तर्कै-रेव दूष्यते। अतस्तत्र केवलतर्कमूलत्वम्। तच्च सू-त्रकृता तर्काप्रतिष्ठानकथनादेव निराकृतमिति तदेव मानमतो न तन्निरासे तदाशयः। किन्तु मिथ्या-वादनिरास एवाऽऽशय इत्यर्थं' इति।

३३ 'तदैक्षत बहुस्यां प्रजायेयेती' त्यादिवक्ष्यमाण-श्रुतिसिद्धसृष्टेः प्रतिज्ञादृष्टान्तानुपरोधानुरोधादुदाहृतश्रुत्यन्तरैकवा-क्यतया च ब्रह्माभिन्ननिमित्तोपादानस्य जगतः कार्य्यस्य, कारण-ब्रह्मात्मना विज्ञानस्याऽभिसन्धानात्–'सदेव सोम्येद' मित्या-दिश्रुतिसिद्धस्य प्रतिज्ञातस्यैकविज्ञानेन सर्वविज्ञानस्य सौलभ्यफला दृष्टान्तश्रुतयश्च तादृशः कार्य्यस्य कारणानन्यत्वन्तात्पर्य्ययन्ति। तथाहि–'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं वि-ज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिके-त्येव सत्यम्। यथा सोम्यैकेन लोहमणिना सर्वं लो-हमयं विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं लोहमित्येव सत्यम्। यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्य' मिति।

३४ अर्थस्तावत्–हे सोम्य! यथा एकेन केवलेन, मृत्पिण्डेन कारणेन, विज्ञातेन, सर्वमशेषं, मृन्मयं मृत्कार्य्यं, विज्ञातं स्यात्। प्रपञ्चितप्रक्रियया कार्य्यस्य कारणानन्यत्वान्मृ-त्पिण्डात्मनेति यावत्। पृथुबुध्नोदरत्वादियत्तदवस्थान्तरेऽपि तस्य

मृत्पिण्डत्वानपायात् । अन्यथा शरीरादिषु—'**एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेष्वि**' त्यादिपिण्डत्वव्यवहारानुपपादप्रसङ्गात् । उपपादयितुन्तावदाह—**वाचाऽऽरम्भणं विकार इति**। पाणी विशोधयितुकामेन, मृदमाहरेति नियुक्तेन नियोज्येन घटादावुपस्थापिते, घटोऽयं न मृदिति **विकारः** पृथुबुध्नोदरत्वादियत्तदवस्थादर्शनप्रयुक्तकारणत्व-प्रतिषेधरूपः स्वरूपच्यावो, **वाचा** वाङ्मात्रेण, **आरम्भणमा**-रभ्यत इत्यर्थः ।

३५ '**मुखनासिकावचन**' इत्यादिवद्बाहुलकात्कर्मणि ल्युट् । परिणामपदाभिलप्यविकारात्मनां पृथुबुध्नोदरत्वादियत्तदवस्थानां, तदधिष्ठानभूतस्य मृत्पिण्डस्याऽनुदितपुनःकारणभावप्रतिरोधिधर्मान्तरत्वाद्भेदानापादकत्वात् । न पुनर्विकारपदाभिलप्यविकारात्मनो घनत्वाम्लत्वाद्यवस्थायास्तदधिष्ठानभूतस्य दुग्धस्योदितपुनः कारणभावप्रतिरोधिधर्मान्तरत्वादभेदानापादकत्वात्—दध्येतन्न दुग्धमिति स्वरूपच्याववदिति भावः ।

३६ किञ्च—यथा सुप्त उत्थित उपविष्टो वा पुरुषः—सुप्तोऽयं न पुरुष इति न प्रतिषिध्यते । व्यवह्रियते तु केवलन्तत्तास्ववस्थासु प्रतीयमानासु सुप्त इत्यादिभिः पदैः । तथेहाऽपि पृथुबुध्नोदरत्वाद्यासु तत्तास्ववस्थासु प्रतीयमानासु तदाश्रयस्य नाऽतद्भावः । किन्तु तत्तैर्घटादिभिः पदैर्व्यवहारमात्रम् । अवस्थाः पुनरवस्थाभ्यो भिद्यन्ते । यथा स्वाप उपवेशात् । तथाच—यदि सुप्तोऽयं नोपविष्ट इत्यवस्थावद्घटोऽयं न मृदित्यवस्थामात्रं प्रतिषिध्यते ? न किञ्चित्तर्ह्यनुपपत्तिग्रस्तम् । यदि तु काणादवादमुपजीव्य तत्तदवस्थावतो मृत्पिण्डत्वं प्रतिषिध्यते ? न तर्हि न वाङ्मात्रेण ।

३७ तदेव विस्पष्टयितुमाह—**नामधेयमिति**। तत्तदवस्थस्य तत्तद्व्यवहारानुरोधेन मृत्पिण्डस्यैव घटादि **नामधेयमित्यर्थः**। तथाच नामरूपव्याकरणावसरे तत्तदवस्थया स्थितस्य कारणस्य मृत्पिण्डस्य तत्तदर्थक्रियासिद्धये तत्तेन नामधेयेन व्यवह्रियमाणत्वादभिन्नमेव कारणात्कार्य्यम्। न पुनः स्वेन रूपेण कारणाद्भिन्नम्। तदाह—**मृत्तिकेत्येव सत्यमिति**। इतिशब्दोऽत्र हेतौ प्रकारे वा। तथाच मृन्मयं **मृत्तिका**, मृदभिन्नम्। इति हेतोरेव **सत्यम्**। कारणरूपेणैव वा सत्यमित्यर्थः। शिष्टं स्पष्टमिति।

३८ वैवर्त्तिककैवर्तकवादिविक्षोभस्तदितरो विशेषश्च तदनन्यत्वसूत्रप्रतिज्ञादृष्टान्तानुपरोधाधिकरणभाष्यतत्प्रकाशाभ्यां **सहस्राक्ष**पूर्वभागतृतीयश्लोकव्याख्यानिदर्शितवाचारम्भणश्रुतिविरोधपरिहारप्राप्तावसरया **भट्टश्रीगोवर्द्धनवेदान्तभट्टाचार्य्यपाद**विरचितया **मारुतशक्त्या** च सुलभावगम इति तदुभयमपि तत एवाऽवसेयम्। अवसरोपहतिभयात्तु नेह तत्प्रपञ्चामहे। तथाच नित्यनिर्दुष्टशिष्टतमशब्देनाऽनुशिष्ट उपपन्नश्च कार्य्यकारणयोरयमभेदः कुतोऽपि नाऽन्यथयितुं शक्यः **काणादकोविदै**रित्यनभिभवभयम्।

३९ **भेदाभेदवाद**श्चैतावता निरस्तावसरो वेदितव्यः। तथाहि—**भास्कराचार्य्या**स्तावदाहुः—अस्त्वभेदः। भेदोऽपि पुनरभ्युपेयः। अतिप्रसङ्गात्। तयोरात्यन्तिके ह्यभेदे मृत्पिण्डोऽपि घटत्वादिना व्यवह्रियेत, नीरञ्च तत आह्रियेत, घटत्वादिजातयश्च तेन भ्रियेरन्। न पुनरेवं वीक्षामहे। तदनात्यन्तिकोऽयमभेदः।

नापि भेद एवाऽऽत्यन्तिक आस्थातुं शक्यः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया उपरोधप्रसङ्गात् । दृष्टान्तवैयाकुल्यापाताच्च । तदास्थेयो भेदाभेदवाद इति । तदहृदयङ्गमम् । तथाहि—न भेदाभेदवादः शक्य आदत्तुम् । पृथुबुध्नोदराद्यात्मना भेदात्कारणात्मनाऽभिसंहितज्ञानस्याऽयोगात् । पृथुबुध्नोदरादेर्मृत्पिण्डतो भिन्नत्वात् । अथ तथा ज्ञानस्य नाऽयोगः ? न तर्हि पृथुबुध्नोदरादेर्भिन्नत्वमपि । तदभेद एव केवल आस्थीयताम् । कृतं भेदेन । नचाऽभेदस्याऽऽत्यन्तिकत्वे व्यवहारः सङ्कीर्य्येत ? अवस्थाभेदादेव तदुपपत्तेः । तत्तादृश एवैष भेदाभेदवाद इति दिक् ।

४० इदं निर्गलितम्—उदाहृतश्रुत्यनुरोधात्तासाञ्च तथार्थताया '**यस्तु यस्याऽऽदिरन्तश्च स वै मध्यञ्च तस्य तत् । विकारो व्यवहारार्थं यथा तैजसपार्थिवा**' इति पार्थिवपदेन मृत्पिण्डं, तैजसपदेन च लोहमणिनखनिकृन्तनद्वितयं समर्पयता श्रीमद्भागवतैकादशस्कन्धवाक्येन निर्णयात्कार्य्यकारणयोरभेदस्य सुदुर्व्यासेधतासिद्धेः कार्य्यस्य जगतः कारणब्रह्मात्मनाऽभिसंहितस्य ज्ञानस्य सौलभ्याय च दृष्टान्तश्रुतिभिस्तदैदमर्थ्योपबृंहणैः—'**त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमात्मतन्त्रे । त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात् । यथा सुवर्णं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य । मध्ये तदेव व्यवहार्य्यमाणं नानाऽपदेशैरहमस्य तद्वत् । यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु । एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौ-**

किकवैदिकैर्जनै' रिति श्रीमद्भागवताऽष्टमैकादशद्वादशस्कन्धवाक्यैश्च भेदानापादकपरिणामपदाभिलप्यविकारवतां मृत्पिण्डादीनां दृष्टान्तानां निदर्शनात्—'सच्चिदानन्दसम्भूतञ्जगदेतन्मदात्मकम्। इति सर्वात्मदृष्ट्यर्थं सर्वस्याऽऽह विभूतिता' मिति तत्त्वदीपिकोपक्रमकारिकया प्रयोजनस्य व्युत्पादनात्तदर्थं समभिव्याहारेण विभूतिविस्तरं प्रवक्ष्यतस्तस्य तादर्थ्यमादितः स्फुटयितुं—'यद्यस्माज्जायते यत्र लीयते यद्रूपेणाऽवतिष्ठते तत्तदभिन्न' मिति नियममन्तरभिप्रेत्य—'अहमादिश्च मध्यञ्च भूतानामन्त एव चे'ति भगवतो वचनेन—'तदनन्यत्वमारम्भणशब्दादिभ्य' इति प्रतिज्ञादृष्टान्तानुपरोधाधिकरणमुपष्टम्भितुं प्रवृत्तेन सूत्रेण च निर्णीयमानेन जगतो ब्रह्मानन्यत्वेन च तत्स्फोरणात्तेषाञ्च बुद्धिसाम्यद्वारा ज्ञानसौलभ्यैकफलत्वनियमान्मृत्पिण्डादीना पृथुबुध्नोदरत्वादितत्तत्स्वपूर्वावस्थान्यथाभाववत्प्रत्युत ब्रह्मणः पूर्वावस्थान्यथाभावो बलादभ्युपगन्तव्य इति।

४१ अन्यथा सर्वोपजीव्यत्वाद्बलवती—'तदात्मानँ स्वयमकुरुते'ति—'तत्तेजोऽसृजते'ति च श्रुतिरित्येवञ्जातीयकं श्रुत्यन्तरञ्च व्याकुप्येत। यदाहुः—'आत्मकृतेः परिणामा'दिति सूत्रे श्रीमदाचार्य्यपादाः—'पूर्वावस्थान्यथाभावस्तु कार्य्यश्रुत्यनुरोधादङ्गीकर्त्तव्य' इति। इदञ्च श्रीमत्पुरुषोत्तमाः प्रकाशयाम्बभूवुः—'पूर्वे'त्यादि। तथाच दधिदुग्धन्यायेन स्वरूपस्य गन्धादिगुणानाञ्चाऽन्यथाभाव एवाऽत्राऽग्राह्यविकारत्वेनाऽभिप्रेयते। न तु संख्यान्यथाभावोऽपि तथात्वेनेति कार्य्यश्रुत्यनुरोधा-

दङ्गीक्रियते। अत एव वेदस्तुतौ-'न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसित' मिति ग्राह्यविकारस्याऽदुष्टत्वमुक्तमिति नायन्दोष इत्यर्थ' इति। एतेन संख्यान्यथाभावेनाऽपि तत्सहचरिततासम्भवो निरस्तो वेदितव्यः।

४२ तथाच परिणामपदाभिलप्यविकारमुपवर्णयन्त्या श्रुत्यैवाऽर्थतस्तस्य विकारपदाभिलप्यविकारवत्त्वं निराकृतं, ग्राह्यस्य च विकारस्याऽदुष्टत्वमादितः प्रपञ्चितेन सर्गस्य प्राकृतेतरपरमैश्वर्य्यपर्य्यवसायित्वेन प्रत्युत महामहिममहनीयतावहत्वञ्च समनुमतमित्यतिरोहितम्। अनाकुलश्चैतत्। 'सर्वे वेदा यत्पदमामनन्ति। बन्दिनस्तत्पराक्रमै' रिति श्रुतिश्रीमद्भागवतवचनाभ्यां, श्रुत्या तद्गुणानामेवोपवर्णनीयत्वात्परमासतमायाश्च तस्या भ्रमाद्ययोगान्नित्यनिर्दोषपूर्णगुणविग्रहे च ब्रह्मणि दोषाणामसम्भवात्।

४३ इतश्चैतत्सुसिद्धम्-तैत्तिरीये श्रूयते-'असद्वा इदमग्र आसीत्ततो वै सदजायते' ति। अर्थः पुनः-इदम् स्वबुद्धिस्थञ्जगत्। न तु परिदृश्यमानम्। बोध्यस्य शिष्यस्याऽभावादस्य केवलश्रुतिवाक्यत्वात्। अग्रे। वै निश्चयेन। असत् भावविकारात्मकसत्ताशून्यम्। ब्रह्मेति यावत्। कलशकरकादिष्वनभिव्यक्तेषु मृत्पिण्डवत् दध्नि चाऽनुद्भूते दुग्धवदिति भावः। अभिव्यक्तेः प्राक् श्रौतसत्कार्य्यवादिभिः कारणात्मनैव कार्य्यसत्तायाः स्वीकारात्। आसीत्। ततः अनन्तरम्। यद्वा-उपादानादात्मनः वै निश्चयेन। इदम्पदमनुकृष्यते। सत् व्याकृतनामरूपं सत्। अजायत अभिव्यक्तमिति। तदव्यवहितञ्च पठ्यते-'तदात्मानऍं स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत इती' ति।

४४ तदयं विमर्शः—श्रुतिर्यदि सत्कार्य्यवादमभिप्रेयान्न पुनस्त-दविकारित्वमपि, सत्पदमात्रमुपादाय तर्हि विरमेत् । न ह्यसतः सदभिव्यज्यते । श्रूयते च—'**कुतस्तु खलु सोम्यैव स्यादिति होवाच कथमसतः सज्जायेते**'ति । युक्तयश्च तदनु-कूला भवन्ति—'**असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्य्य**' मिति । सत्ता चाऽऽम्नायते—'**सदेव सोम्येदमग्र आसीदि**' ति । श्रुत्युपष्टब्धा युक्तयश्चाऽनाभास्याः । तथाच ताव-तैव सत्कार्य्यवादस्य सौस्थिर्य्यम् । कुतस्तु सा पुनराह—**तदात्मा-नमित्यादि**? यद्यभिन्ननिमित्तोपादानकर्तृतां ब्रह्मण उपवर्णयितुम्? कुतस्तर्हि—'तद्वै स्वयं सदकुरुते' त्येवं न पठेत्? एवमपि तस्या उपवर्णयितुं शक्यत्वात् । स्वेतरानपेक्षतायाः स्वयम्पदार्थत्वाद्ब्रह्मा त्मना तत्सत्तायाश्च स्वीकारादात्मपदानौपयिकत्वात् ।

४५ तदिदं तात्पर्य्यम्—यत्सदभिव्यक्तं, किन्तद्दुग्धाद्दधिवद्विकृतं सत्? नैवमित्याह—**तदित्यादि** । **तत्** तादृशमुपादानं ब्रह्म कर्तृ **स्वयम्** निरस्तसाम्यातिशयस्वाभाविकानन्तविचित्रशक्तिशालितया कर्त्रन्तरमुपादानान्तरमुपकरणान्तरञ्चाऽनपेक्ष्येत्यर्थः । **आत्मा-नम्** उपादानं क्रियाश्रयञ्च स्वमेव । क्रियागोचरं कर्मेति यावत् । **अकुरुत** कृतवत् । कलशकरकादीनामभिव्यक्त्यनभिव्यक्तिसाधा-रणकारणात्मताकत्वात्कलशं करोतीत्येवमादिव्यवहारेऽपि तस्य मृत्पिण्डनामधेयत्वादतद्भावाद्यथा तानभिव्यञ्जन् कुलालो मृत्पिण्ड-न्तथेत्यर्थः । तथाचाऽविकृतमभिव्यक्तमिति ।

४६ यदि तु पूर्वावस्थान्यथाभावात्मनः परिणामपदाभिलप्यस्य

ग्राह्यस्य विकारस्य नाऽदुष्टत्वम् ? कुतस्तर्ह्यभिव्यक्तिरविकृतेति ग-म्येत ? तथाच तददुष्टत्वं सिद्धसाक्षाच्छ्रुत्यनुगृहीततताकम् । महा-महिममहनीयतावहत्वञ्च तस्य तावता व्यक्तम् ।

४७ ततश्चाऽऽह–तस्मादित्यादि । स्वेतरसमस्तसाहायकनै-रपेक्ष्यमात्रावलम्बना पुनर्न तथोक्तिः । लोकेऽपि कार्य्यस्य विलु-क्षावद्यत्व एव निरुपकरणस्य तत्प्रादुष्कर्तुर्नैपुण्यप्रशस्तेः । तथाच ब्रह्मणस्तादृशः परिणामपदाभिलप्यस्य ग्राह्यस्य विकारस्याऽदुष्टत्वं ततश्च विकारपदाभिलप्यविकारवत्ताराहित्यं ततश्च तस्य महामहि-ममहनीयतावहत्वञ्चेति सुसिद्धमेतत् ।

४८ तदर्थः पुनः–तस्मात् परिणामस्य दोषशून्यत्वात् । तत् परिणामि ब्रह्म । सुकृतम् सुष्ठु प्रशस्यं, कृतं कर्म, यस्य तादृशमित्यर्थः । अप्राकृतमिति यावत् । उच्यते परिभाष्यते सङ्केत्यत इति यावत् । मया श्रुत्येति शेषः । तथाच निरस्तस-मस्तदोषाया आप्ततमाया मम विपर्य्ययाद्यसम्भवात्परिणामस्य महामहिममहनीयतावहत्वं सङ्केतस्य च सौचित्यमित्यनिरसनीय-मिति भावः । इति ।

४९ विशेषः पुनः–'असदिति चेन्न प्रतिषेधमात्र-त्वात् । असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशे-षात् । युक्तेः शब्दान्तराच्चे' ति सूत्रत्रयभाष्यप्रकाशाशयवि-मर्शेन–'यद्वै तत्सुकृतम् । रसो वै सः । रसꣳ ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति । को ह्येवाऽन्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवाऽऽनन्द-याति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽ-

निरुक्तेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवती' त्यादितदव्यवहितश्रुतितात्पर्य्यपर्य्यालोचनेन च सुबोध कल्पमिदमुपदर्शितम् ।

५० प्रदर्शितमभेदनियममनन्तरमुपेत्य—'स्वस्तिकमिदं सुवर्ण' मितिवदशिष्यमानं सर्वं ब्रह्मत्वेन प्रत्यभिज्ञानन्तश्छन्दोगाश्च शाण्डिल्यविद्यायां ब्रह्मोपासनमामनन्ति—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते' ति । परिणामस्य दोषशून्यताविरहे पुनः—'दधीदं दुग्ध' मितिवत्सर्वस्य तथा प्रत्यभिज्ञानं नोपपद्येत । तथाच तस्य परिणामित्वमविकारित्वं तस्य च दोषशून्यत्वमिति श्रुतिसिद्धम् । प्रत्यभिज्ञया सर्वस्य तज्जलान्त्वेन ब्रह्मत्वं प्रतिज्ञायोपासनस्याऽऽम्नननात्तस्य महामहिममहनीयतावहत्वञ्च स्पष्टम् ।

५१ यदि तु तत्तत्प्रतिनियतनामरूपपदार्थसमष्टिरूपजगदात्मना न तदविकृतं ब्रह्म पर्य्यणंस्यत्तर्हि सर्वं ब्रह्मेति प्रत्यभ्यज्ञास्यत । तदभावे च न तत्तथोपासिष्यत । तथाच तेन सिद्धान्तःकरणशुद्धेरुपासकस्य—'अथ खलु क्रतुमयः पुरुषो, यथा क्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवती' त्यव्यवहितश्रुतमुपासनानुरूपफलभाक्त्वं सर्वात्मकभावो नोपापत्स्यत । नापि—'स क्रतुं कुर्वीते' त्युपदिष्टस्य क्रतोरधिकारः फलञ्च प्रावर्तिष्यत । नैव च तत्तत्फलोपलिप्सां विद्वांसोऽभिन्यवेक्ष्यन्तेति ।

५२ श्रुत्यर्थप्रभृतिविस्तरस्तु समन्वयाध्यायद्वितीयपादप्रथमाधिकरणभाष्यप्रकाशपर्य्यालोकसुगमः सहस्राक्षपूर्वभागद्वितीयश्लोक-

व्याख्याप्रपञ्चितशुद्धाद्वैतपदार्थसङ्गतिनिरासप्रस्तुतावसरभट्टश्री-गोवर्द्धनवेदान्तभट्टाचार्य्यपादविरचितमारुतशक्तिसुबोधश्चेति तत एव जिज्ञासितव्यः । विस्तरादिशङ्कया तु न सोऽयमिह प्रस्तूयते ।

५३ इत्थमिह–'इदं सर्वं यदयमात्मे' त्याद्या बृहदारण्यकादिश्रुतय–'एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः । सोऽविकम्पेन योगेन युज्यते नात्र संशयः । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते । इति मत्त्वा भजन्ते मां बुधा भावसमन्विताः । मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च । तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगन्तं येन मामुपयान्ति ते । तेषामेवाऽनुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते' त्याद्याः स्मृतयश्चाऽनुसन्धातव्याः ।

५४ ततश्च कण्ठरवेणाऽपि प्रतिष्ठापयन्ति प्रस्थानानि परिणामिनस्तस्याऽविकारित्वम् । तथाहि–श्रुतयस्तावत्–'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा । निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मन्तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः । ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं

त्वरिष्ट' मिति । गीता तावत्—'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् । महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निदानम् । त्वमव्ययः शाश्वतधर्म्मगोप्ता सनातनस्त्वं पुरुषो मतो म' इति । उत्तरतन्त्रं तावत्—'विकारावर्ति च तथाहि स्थितिमाहे' ति । समाधिभाषा तावत्—'यस्मिन्विरुद्धगतयो ह्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्यात् । तद्ब्रह्म विश्वभवमेकमनन्तमाद्यमानन्दमात्रमविकारमहम्प्रपद्ये । त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानन्दमात्रमविकारमनन्यदन्यत् । विश्वस्य हेतुरुदयस्थितिसंयमानामात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः । तथापि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः । अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया नचाऽन्यथे'ति । इति ।

५५ इतश्चैष सिद्धान्तः श्चेमानसुपश्लेष्यते । तथाहि—त्रेधा तावत्कार्य्यम् । जडजीवान्तर्य्याम्यात्मना भेदात् । स च जडत्वानित्यत्वादिना जडानां नित्यत्वचेतनत्वादिना जीवानां प्रकटसच्चिदानन्दरूपतायामपि परिच्छिन्नत्वप्रतिनियतकार्य्यकर्तृत्वादिना च हेतुनाऽन्तर्य्यामिणां परस्परनिरूपितः ।

५६ तदेष संशयः समुत्सेधति—यदि तावदुपन्यस्तैस्तैस्तैः श्रुतिसूत्रस्मृतिप्रभृतिभिः प्रमाणैरुपपादितः कार्य्यकारणयोरभेदः सिद्धान्तः कथन्तर्हि तेषां परस्परं भेद उपपद्यताम् । तत्त्वतश्चाऽयं

दृश्यते । व्यापकञ्च ब्रह्मेति सिद्धान्तः । व्यापकत्वञ्च देशतश्च कालतश्च वस्तुतश्चाऽपरिच्छिन्नत्वम् । वस्तुतश्च तत्र परिच्छेदः प्रसजति । परस्परं भेदात्तेषां कारणादतिरेकात् । तथाच भेदोऽपि स्फुटः प्रसजन् । तदभावे परिच्छेदाप्रसक्तेः । त्रेधा चाऽयम् । सजातीयादित्रिविधवस्तुनिरूपितत्वात् । जडजीवान्तर्य्यामिणां यथाक्रमं विजातीयतायाः सजातीयतायाः स्वगतत्वस्य च तैस्तैर्हेतुभिः स्पष्टत्वात् । '**यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपा**' इति मुण्डकश्रुतिसमर्पितसरूपपदेन जीवस्य तथा स्वीकारात् । तथाचोपन्यस्तानां श्रुतिसूत्रस्मृतीनामुपप्लवः । अद्वैतसिद्धान्तभङ्गप्रसङ्गश्च । तत्कतरो भेदाभेदयोः सिद्धान्त इति ?

५७ तत्र प्रतिविधास्यामः । कठाः पठन्ति—'**यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती**' ति । इयं व्याक्रिया—यदेव धर्मजातम् । '**सत्यं ज्ञानमनन्तं ब्रह्म । सत्यं विज्ञानमानन्दं ब्रह्मे**—' त्यादिस्वरूपलक्षणश्रुतिभिः सत्यत्वादितत्तद्धर्मविशिष्टार्थाभिधायिसत्यादिपदैर्लक्षितस्वरूपस्य सच्चिदानन्दस्य ब्रह्मणः सच्चिदानन्दात्मकास्तिभातिप्रियत्वधर्मवत्त्वात्तेषाञ्च प्रकाशाश्रयाधिकरणे—**प्रकाशस्याऽऽश्रयाणां सूर्य्यप्रभृतीनां प्रकाशेन पृथक् स्थित्यभावान्नित्यसहचारित्ववत्प्रकाशस्याऽप्ययुतसिद्धत्वात्सूर्य्याद्यविनाभूतत्वस्याऽर्थतः सिद्धेः प्रकाशाश्रयतुल्यतया भगवदविभक्तत्वस्याऽऽदत्तंऽथतासाधनात्ता**-दृशानि, कङ्कणकिङ्किणीप्रभृतिषु सुवर्णसत्तावत्तत्तत्पदार्थेषु तत्तत्पुरु-

पप्रतीतिसाक्षितया ब्रह्मणः सदादिरूपेण वृत्तिमवगमयन्ति तान्य-स्तित्वादीनीति यावत्। इह जडजीवान्तर्य्याम्यात्मना त्रिविधे कार्य्ये जगतीत्यर्थः। नियत इति शेषः। अयोगं व्यवच्छिन्दन्विशे-षणसङ्गत एवकारः साकल्यपर्य्यवसायी।

५८ विवृतं विस्पष्टयितुमाहुः—तदित्यादि। तत् तादृशानि धर्माणीति यावत्। अमुत्र समवायिनि ब्रह्मणि। ब्रह्मणाऽ-न्विते प्रपञ्चे ब्रह्मविषयकप्रतीतिसाधनतया सत्त्ववदित्यर्थः। येन हि यदन्वीयते प्रत्याय्यते तेन तैस्तैर्धर्मैरात्मनि तत्। कङ्कण-किङ्किणीकुण्डलानि हि सुवर्णेनाऽन्वीयन्ते प्रत्याय्यते तैर्निकषो-पलारोहित्वादिभिर्धर्मैरात्मनि सुवर्णम्। तथाच तत्तत्पदार्थेषु तत्तत्पुरुषप्रतीतिविषयाणां सदादिरूपेण ब्रह्मसमन्वयमवगमयता-मस्तित्वादिधर्म्माणामुभयत्र सत्त्वाज्जडजीवान्तर्य्यामिणामनतिरे-कात्कार्य्यकारणोभयनिरूपितः पारस्परिको भेदः सिद्धप्रसक्तिशून्य-ताकः। गन्धवत्त्वप्रभृतिभिर्धर्मैरात्मनि पृथिव्याः प्रत्यायनात्तदन-तिरिक्तासु तत्तासु वीरुत्सु पृथिवीनिरूपितभेदवत्तस्याश्च तन्नि-रूपितभेदवदिति भावः। वीरुदियं न पृथिवीति भेदानु-पपत्त्यैव तत्र तन्निरूपितभेदानापत्तेः। पृथिवीत्वेन तदनतिरेकात्। इत्थञ्च—नैषा वीरुत् पृथिवीय मिति न भेदः किन्तु बुद्धि-शब्दान्तरादिमात्रम्। तच्चोभयस्मिन्नपि मते न भेदसाधनसमर्थ-मित्युपपादितम्। किञ्च। समन्वयः समवायस्तादात्म्यञ्चेत्यनर्थान्त-रम्। तादात्म्यञ्च भेदसहिष्णुरभेदः। तथाचाऽनागन्तुकरूपेण तत्तासां वीरुधां पृथिव्यनतिरेकेऽप्यंशत्वजन्यत्वाद्यागन्तुकरूपेण कारणाद्भेदः। स च नाऽभेदं व्याहन्तीति न किञ्चिदनुपपत्तिपूर्ति।

विकारस्य वागारब्धत्वञ्च प्रागुपदर्शितम् । यश्च त्रयाणामपि तेषां परस्परं भेदः स तु सुवर्णसमवायित्वेन तदनन्यानामपि कङ्कण-किङ्किणीकुण्डलानां भेदवदुपपत्स्यते । अवस्थाभेदात् । तथाच सच्चिदानन्दातिरिक्तस्य वस्तुनः सद्भावशून्यत्वात्फलिते ब्रह्मा-द्वैते परिच्छेदोऽपि स्वयं प्रत्युदस्तः । तदभेद एव सिद्धान्तः । यदाहुस्तत्त्वदीपे **श्रीमदाचार्य्यपादाः–'सच्चिदानन्दरूपन्तु ब्रह्म व्यापकमव्ययम् । सर्वशक्ति स्वतन्त्रञ्च सर्वज्ञं गुणवर्जितम् । सजातीयविजातीयस्वगतद्वैतवर्जित-मि'** ति ।

५९ विपर्य्ययवचनं तत्तेपामर्थानां वैजात्यादिपरीक्षैकप्रयोजनम् । तथाच समन्वयानङ्गीकारेऽपि प्रकृतेरन्वयस्याऽप्रत्याख्येयतया वि-शेषतोऽनवबोधे सम्भाव्यमानप्रसक्तिकानान्तद्धर्माणां न ब्रह्मणि सद्भावः । तथा विवक्षाया अभावात् । तदिदं विवृण्वन्ति– **यदमुत्रेत्यादि** । यत् अस्तित्वादिधर्मजातम् । **अमुत्र** समवा-यिनि ब्रह्मणि । वर्त्तेत इति शेषः । **तत्** । **इह** तादृशे प्रपञ्चे । **अनु** अनुवृत्तमित्यर्थः । कङ्कणकिङ्किणीकुण्डलेषु सुवर्णसमवेत-निकषोपलारोहित्वादिधर्मवदिति भावः ।

६० नन्वेवमभेदाभ्युपगमे प्रपञ्चस्य दुष्टत्वादिप्रतीत्या निखि-लप्राकृतप्रत्यनीके निरस्तसमस्तावद्ये नित्यानन्तकल्याणगुणगण-क्षीरकलशोदधौ ब्रह्मणि दोषप्रसङ्गः? इत्यत आहुः–**मृत्योरि-त्यादि** । **य इहेत्यादि** । नानात्वं द्विविधम् । तत्त्वतो भेदा-भावेऽपि भेदः प्रथमम् । तत्त्वतो भेदो द्वितीयम् । तत्राऽऽदिमं कङ्कणकिङ्किणीकुण्डलेषु । द्वितीयञ्च घटपटप्रभृतिषु । आदिमञ्च

वेदान्तेषु सिद्धान्तः । उपन्यस्तश्रुतिसूत्राद्यनुरोधात् । तथाच—यः अनाघ्रातवेदान्तविकचारविन्दमकरन्दगन्धस्तादृशदोषप्रसङ्गपङ्कप्रतिभोपप्लुतः, इह प्रपञ्चे, ब्रह्मणि, उभयोर्वा, नानेव तत्त्वतो भेदं, पश्यति ज्ञानविषयतामापादयति, सः तादृशभेदद्रष्टा, मृत्योः देवताविशेषात्, मृत्युं मरणं, आप्नोति अधिगच्छति, संसरतीत्यर्थः । 'बहु स्यां प्रजायेये' त्यत्र बहुस्यामित्येतदाकारेणैव नानासृष्टिसिद्धौ प्रजायेयेत्याकारान्तरवचनस्य वैयर्थ्यप्रसक्तेरुच्चनीचादिभावेनाऽऽविर्भावस्य स्वीकारात्तत्र क्रीडैकप्रयोजनतादृशशुद्धयशुद्ध्यवस्थाऽभ्युपेयत्वादिति भावः ।

६१ शुक्तश्चैतत् । 'स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः । विपर्य्ययस्तु दोषः स्यादुभयोरेष निश्चयः । शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु । द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ । धर्मार्थं व्यवहारार्थं यात्रार्थमिति चाऽनघ । दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् । देशकालादिभावानां वस्तूनां मम सत्तम । गुणदोषौ विधीयेते नियमार्थं हि कर्मणामि' त्यादिश्रीमद्भागवतैकादशस्कन्धवचनैस्तथाऽवसायात् । तत एव च न ब्रह्मविदः कचिदपि कुत्सितत्वं प्रतियन्ति । यदाह—'शुनि चैव श्वपाके च पण्डिताः समदर्शिन' इति । समाधिभाषायाञ्चोच्यते—'किं वर्णितेन बहुना लक्षणं गुणदोषयोः । गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित' इति । तदिदमाहुः प्रतिज्ञादृष्टान्तानुपरोधाधिकरणभाष्यप्रकाशे श्रीमत्पुरुषोत्तमाः—'कुत्सितत्वादिभानन्तु दोषदृशामेव न ।

ब्रह्मविदाम्। यथा स्वाङ्गे पुरुषस्य । प्रसिद्धन्तदृषभदेवादिष्वि' ति। तथाच तदनन्यस्य प्रपञ्चस्य दुष्टत्वप्रतीतावपि निखिलप्राकृतप्रत्यनीकस्य नित्यानन्तकल्याणगुणगणक्षीरकलशोदधेर्ब्रह्मणो निरस्तसमस्तावद्यता निरुपप्लवलावण्यलोलकल्लोला। इति।

६२ ननु प्रियत्वस्याऽऽत्मधर्मत्वात्प्रपञ्चस्य च तदभिन्नतासिद्धान्तान्मृदनतिरिक्तेषु कलशकरकप्रभृतिष्वविशेषाद्गन्धवत्त्वादिप्रतीत्येव सर्वत्र प्रियत्वप्रतीत्या भवितव्यम्। प्रतीयते तु देशतश्च कालतश्च तत्तत्र परिच्छेदात् । कस्यचित्कुत्रचित्कदाचित्प्रियत्वानुभवात् । तथाहि–नैदाघेषु दिनेषु प्रचण्डमार्तण्डमरीचिनिचयनिचुलितस्य घर्मघस्मरो घनसारघुसृणालेपः प्रीयते, हैमन्तिकेषु च वासरेषु तुषारसीकरसम्पृक्तसिचयाञ्चलसंवृतशरीरस्य दुस्तरतमशीतशातनः सङ्कुलः कुङ्कुमपङ्कः । नैदाघेष्वपि दिवसेषु च शीतज्वरेण रुग्णशय्यामधिशायितस्य घनसारघुसृणालेपो न प्रीयते, प्रत्युत हैमन्तिकेष्वहस्सु प्रीयमाणस्तादृशः कुङ्कुमपङ्क एव । एवं कुङ्कुमपङ्कोऽपि प्रियविप्रयोगविधूनितधैर्य्यकणायाः पथिककामिन्या हैमन्तिकेष्वपि दिवसेषु न प्रीयते, प्रत्युत स एव नैदाघेषु घस्रेषु प्रीयमाणो घनसारघुसृणालेप इति । तथाच नापवर्त्तते ब्रह्मणि सुलभप्रसङ्गः परिच्छेद इति चेत्?

६३ नैतदेवम् । घनसारघुसृणालेपादीनां प्राकृतप्रीतिविषयत्वात्। प्राकृती च प्रीतिर्न वास्तवी परमाज्ञानिकी । प्रदर्शितस्य परिच्छेदस्यैव तत्र प्रतिभूत्वात् । तथाचौपाधिकी सा। न हि नैसर्गिकी देशेन च कालेन च शक्या परिच्छेत्तुम् । न हि घनसारघुसृणालेपः कुत्रचन शरीरे जातुचिन्न स्वरूपतः

प्रच्यवते, कुत्रचिच्च शरीरे जातुचिच्च स्वरूपमुपनमति । कस्यचिद्वा ततः प्रच्यवते, कस्यचिच्च तदुपनमति । एवमितरदपि । तथाच—**'सौमित्रे ननु सेव्यतान्तरुतलञ्चण्डांशुरुज्जृम्भते चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलती—'**ति प्रणयिनीविप्रयोगपरिपाटीमाटीकमानस्य लीलातनोर्भगवतो रघुपतेरमृतमरीचौ चण्डकिरणप्रतीतेरिव तथा परिच्छिन्नायास्तैस्तैरर्थैः सविषयायाः प्रीतेरपि नैसर्गिकत्वस्य सुदुरभ्युपगमत्वादौपाधिकत्वमपरिहार्य्यम् । एतेन तत्तेषु तादृशं प्रियत्वमप्यौपाधिकं व्याख्यातम् ।

६४ मैत्रेयीब्राह्मणे च तदौपाधिकत्वं सिद्ध्यति । तथाहि । **'मैत्रेयीति होवाचे'**त्यादिना गार्हस्थ्यात्पारिव्राज्यमुपयास्यन्याज्ञवल्क्यः स्वां पाणिगृहीतीं मैत्रेयीन्तत्र तदनुमतिं द्वितीयया कात्यायन्या पत्न्या द्रव्यविभागेन तद्विच्छेदञ्चाऽभ्यर्थ्य—**'सा होवाचे'**त्यादिना ससागरपरिखपृथिवीपूर्तिपर्य्याप्तेन द्वितीयस्या विभज्य लब्धेन वित्तेन स्वामृतत्वसम्भावनामनुयुक्तस्तदसाध्यत्वाद्वित्तेन तत्सम्भावनां प्रतिषिध्य—**'सा होवाच मैत्रेयी येनाऽहं नामृता स्या'**मित्यादिना तदसाधनेन तेन तदितरकिञ्चित्साध्यशून्यत्वात्स्वस्या अनुपयोगं प्रतिपाद्य तया तत्साधनोपदेशं पृष्टः—**'स होवाचे'**त्यादिना ताम्प्रतिपूज्य तदिष्टसाधनं व्याख्यास्यन्नादितः सावधानां विधातुं निदिध्यासनमादिशति ।

६५ ततश्च व्याचष्टे—**'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु**

कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवती' त्यादि।

६६ एषा व्याख्या—अरे मैत्रेयि। वै प्रतीतमेतल्लोक इत्यर्थः। किन्तत्? इत्यत आह—पत्युः कामायेत्यादि। पत्युः स्वस्येति यावत्। कामाय प्रयोजनाय। पतिः। भार्य्याया इत्यर्थाल्लभ्यते। प्रियः प्रीतिविषयः। न भवति। यत्पतिं प्रीतिविषयतामुपयापयति भार्य्या न तत्पतिसुखसाधनमित्यर्थः। किन्तर्हि तत्? इत्यत आह—आत्मनस्त्वित्यादि। आत्मैकसुखसाधनन्तदित्यर्थः। तुरेवकारवचनः। शिष्टमतिरोहितार्थम्।

६७ तथाच—प्रेमास्पदस्य शिशोः क्रीडनकेषु तत्सुखसाधनत्वाद्धेतोः पितृप्रभृतिप्रीतेरौपाधिकत्ववन्निस्तुलस्नेहसदनस्याऽऽत्मनः सुखसाधनत्वाद्धेतोः पतिप्रभृतिषु जायमानाया भार्य्याप्रभृतिप्रीतेरप्यवास्तवत्वम्। सहेतुकत्वात्। अनैवम्भावे यदृच्छया तिरोहिते तस्मिन्नपत्यान्तरनिरासवत्तत्क्रीडनकनिरासः स्वमुद्वेजयतां पतिप्रभृतीनां भार्य्याप्रभृतिभिः परित्यागश्च नोपपद्येत। आत्मविषयायाः पुनर्न तस्यास्तथात्वम्। निर्हेतुकत्वात्। तथाच निरुपाधिप्रेमास्पदमात्मैव न किञ्चन तदितरत्। इत्थञ्च स एव द्रष्टव्यो न पुनरौपाधिकप्रणयपात्राणि पतिप्रभृतीनीति।

६८ तदिदं विवुबूर्षुर्व्याचष्टे—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो, मैत्रेय्यात्मनि वा अरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विदितमि' ति।

६९ इयं विवृतिः—निश्चयवचनं वाअव्ययं विशेष्यसङ्गतैव-कारार्थपर्य्यवसायि। तथाच निरुपधिभावभाजनमात्मैव न त्वौ-पाधिकप्रणयपात्रं किञ्चिदन्यत्। **द्रष्टव्यः**। दर्शनं चाक्षुपन्त-द्विषयतामापादयितव्य इत्यर्थः। न पुनर्ज्ञानं तत्। **ज्ञानप्रसा-देन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्याय-मान**' इति श्रुतौ—'**भक्त्या त्वनन्यया शक्य अहमेवं-विधोऽर्जुन। ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तपे**' ति स्मृतौ च ज्ञानदर्शनयोर्भेदेन निरूपणात्। किन्तत्साधनम्? इत्यत आह—**श्रोतव्य इति**। सहकारिणी आह—**मन्तव्य-इत्यादि**। **मन्तव्य इति**। अधिकारानुरोधेन श्रवणादापा-ततो ज्ञाने बाधसम्भावनानास्कन्दितत्वाय युक्तिभिरनुमानरूपा-भिरनुचिन्तनस्याऽऽवश्यकत्वात्तद्विधेयमित्यर्थः। **निदिध्यासि-तव्य इति**। चित्तस्य निरन्तराऽऽयततदेकतानता सम्पाद्येत्यर्थः। एते च श्रवणाङ्गम्। यदाहुर्द्वितीयाधिकरणे **श्रीमदाचार्य्य-पादाः**—'**मनननिदिध्यासनयोः श्रवणाङ्गत्वमि**' ति। त-थाच तत्साधनं श्रवणं, तच्च मनननिदिध्यासनाभ्यामुपकार्य्यमि-त्यभिप्रायः। अन्यथा मननस्य वैधत्वेन प्रामाण्यप्रसक्तौ प्रमाण-स्याऽनधिगतार्थगन्तृत्वनियमो भज्येत, ब्रह्मणः केवलोपनिषद्वे-द्यता विप्लवेत, बृहदारण्यकतृतीयाध्यायषष्ठब्राह्मणञ्च व्याकुप्येत।

७० तस्मिन्ब्राह्मणे—'**यदिदꣳ सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चे**'त्यादिष्वनुमानविधया प्रवर्तितेषु प्रश्नेषु—'**वायौ गार्गी**' त्यादिना प्रत्युत्तीर्णया वाचक्नव्या गार्ग्या—'**कस्मिन्नु खलु ब्रह्मलोका ओताश्च**

**प्रोताश्चे**' ति पुनः प्रवर्त्तिते प्रश्ने—'**स होवाच गार्गि मातिप्राक्षीर्मा ते मूर्धा व्यपसदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिती**' ति याज्ञवल्क्येन प्रतिषेधात्तदतिक्रमे शिरःपातदोषकीर्त्तनाच्च । आत्मनो देवतायाः स्वप्रश्न आगमिकः । गार्ग्याः पुनरानुमानिकत्वात्तमतिक्रान्त इत्यतिप्रश्नः । स यस्याः सा वासवादिरतिप्रश्न्या देवता । आत्मदेवता न तथेत्यनतिप्रश्न्या । तां केवलागमगम्यामिति तत्राऽऽर्थात् ।

७१ ननु दर्शनविषयतामापादितेनाऽऽत्मना किम्फलम्? इत्यत आह—**मैत्रेय्यात्मनीत्यादि** । प्रपञ्चितया दिशा कार्य्यस्य कारणानन्यत्वात्सर्वत्राऽऽत्माभेदबुद्ध्या तत्स्फूर्त्तौ सर्वात्मभावसिद्धेरमृतत्वसम्पत्फलमित्यर्थः । सर्वात्मभावः सर्वस्मिन्नात्मत्वेनाऽऽत्मनः प्रीतिः । सा च तत्र निरुपधिरित्युक्तम् । तथाच विद्वद्दशायां परिच्छेदाप्रियत्वयोर्बाधादाज्ञानिकी सहेतुकत्वादौपाधिकी च घनसारघुसृणालेपप्रभृतिषु प्रीतिरित्येतदपास्तप्रत्यूहप्रतिपत्तिकम् । तदिदमाहुः समन्वयसूत्रे **श्रीमदाचार्य्यपादाः**—'**अज्ञानात्परिच्छेदाप्रियत्वे । ज्ञानेन बाधदर्शनादि**' ति ।

७२ नन्वेवं देहे भवन्त्या आत्मबुद्धेः प्रमात्वप्रसङ्गः । नचेष्टापत्तिः । '**यस्याऽऽत्मबुद्धिः कुणपे त्रिधातुक**' इत्यादिना श्रीमद्भागवतादौ तस्या निन्दितत्वाभ्यनुज्ञानादिति चेत्? अत्राहुः **समस्तसिद्धान्तसारसर्वस्वविदो लालूभट्टोपनामानः श्रीमन्तो बालकृष्णभट्टाः**—'**अजातब्रह्मज्ञानस्य देहं विकारवत्त्वेन पश्यतो मायामोहवशाज्जाताया देहा-**

त्मबुद्धेरेव सर्वशास्त्रेषु निन्दा । सर्वत्र ब्रह्मत्वेन पश्यतः स्वदेहेऽपि तथा भानाद्भवन्त्यात्मबुद्धिः प्रमारूपैव । तथाह भगवान्भाष्यकारः प्रकृतिश्चेत्यत्र–देहात्मबुद्धिस्तु सत्यां विकार बुद्धौ दोष इती' ति । तथाच–देहाभिन्नत्वेनाऽऽत्मावगाहिनी धीरप्रमा, आत्माभिन्नत्वेन देहावगाहिनी च प्रमेति व्यवस्थितौ तथा बुद्धिर्न दोष इति सिद्धान्तः ।

७३ इदञ्च ब्राह्मणं ब्रह्मपरम् । **'न वा अरे पत्युः कामाये'** त्यादिना पतिप्रभृतिषु प्रीतेरौपाधिकत्वेनाऽऽत्मनि च निरुपधिकत्वेन तदपेक्षया तस्याऽव्याजवल्लभताबोधनादुपक्रमे जीवस्य प्रकृतत्वादस्य तत्प्रकरणताप्रतिभानेऽपि तस्य प्रियत्वेन प्रकृततया स्वरूपेण प्रकृतत्वाभावादवच्छेदकचिन्तायां सर्वत्र ब्रह्मसमन्वयेन जीवेऽपि तत्सद्भावात्तत्समन्वयेनैव तस्यापि प्रियत्वस्य स्वीकार्य्यत्वादात्मन्येव निरुपधिभावभाजनतापर्य्यवसायात्तत्परतायाः सम्भवदभ्युपगमत्वाभावात् । असुखत्वादीनां तत्स्वरूपत्वादात्मनश्च सुखस्वरूपत्वात्प्रियत्वस्य च तदेकधर्मत्वाज्जीवस्य च तत्स्वरूपताप्रतिषेधात् । उपपत्तेरुपक्रमप्रभृतिभ्यो बलिष्ठत्वात् । यदामनन्ति–**'यो वै भूमा तत्सुखं नाऽल्पे सुखमस्ती'** ति ।

७४ स्यादेतत् । अथापि पामरैर्भार्य्यादिभिर्देहातिरेकेण तस्याऽशक्यप्रत्ययत्वात्प्रतीतौ तत्र तत्प्रीतिः प्रतिपादिता नोपपद्यते । तत्राऽऽत्मपदेन देह एव चेदभिलप्यते, सिद्धान्तभङ्गः । पतिप्रभृतिषु च तन्न्यायेन तादृशतदधिष्ठानतास्वीकारः प्रसज्जेत ? नैष दोषः । अहमभिमानविषयत्वेनाऽऽत्मतया देहस्याऽभिमतत्वात् ।

पतिप्रभृतीनाञ्च ममत्वविषयत्वात् । यत्पुनर्देहातिरिक्तस्याऽऽत्मनः केचित्सत्तां नाभ्युपयन्ति तेषामपि ननु न देहवत्पुत्रकलत्रादीनि प्रीयन्ते । देहोऽपि च जातु चिन्ममत्वविषयो न पूर्वानुभूत-देहवत्प्रीयते । प्राणश्चेदात्मा तदापि न देहस्तद्वत्प्रीयते । तथाच निरुपधिभावभाजनमात्मैव नान्यत्किञ्चनेत्यविवादावसरम् । देहात्मबुद्धेरप्रमात्वमित्यन्यदेतत् ।

७५ स्थाने च सर्वमप्येतत् । यत्—'ब्रह्मन् परोद्भवे कृष्ण इयान्प्रेमा कथम्भवेत् । योऽभूतपूर्वः स्तोकेषु स्वोद्भ-वेष्वपि कथ्यता' मिति परीक्षिता पृष्टः श्रीशुक उवाच—'सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः । इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि । तद्राजेन्द्र यथा स्नेहः स्वस्वकात्मनि देहिनाम् । न तथा ममतालम्बिपुत्र-वित्तगृहादिषु । देहात्मवादिनां पुंसामपि राजन्यस-त्तम । यथा देहः प्रियतमस्तथा न ह्यनु ये च तम् । देहोऽपि ममताभाक् चेत्तर्ह्यसौ नात्मवत्प्रियः । यज्जी-र्यत्यपि देहेऽस्मिञ्जीविताशा बलीयसी । तस्मात्प्रि-यतमः स्वात्मा सर्वेषामपि देहिनाम् । तदर्थमेव सक-लञ्जगदेतच्चराचरम् । कृष्णमेनमवेहि त्वमात्मानम-खिलात्मनाम् । जगद्धिताय सोऽप्यत्र देहीवाऽऽभाति मायया । वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च । भगवद्रूपमखिलं नान्यद्वस्त्विह किञ्चन । सर्वे-षामपि वस्तूनां भावार्थो भवति स्थितः । तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यतामि' ति ।

७६ तैत्तिरीये च तदेतत्सिद्ध्यति। तथाहि—'**आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने**'त्युपक्रमे श्रवणानन्तरं, कुतो न बिभेति तापोत्पादकयोः साध्वकरणपापकरणयोः सत्त्वादित्याकाङ्क्षायाम्—'**एत ँ् ह वा व न तपति। किमह ँ् साधु नाऽकरवं किमहं पापमकरवमिती**' ति विद्वदुद्देशेन तयोस्तापानुत्पादकत्ववचने कुत एतदेवमित्याकाङ्क्षायाम्—'**स य एवं विद्वानेते आत्मान ँ् स्पृणुत**' इत्यात्मत्वानुसन्धौ परिच्छेदाप्रियत्वयोर्बाधान्निरुपधिप्रीतिप्रसरेण भयाभाव उपपाद्यमानः श्रूयते। प्राकृतिक्याः प्रीतेर्वास्तवत्वे तु न तयोर्बाधायोगात्सोऽयं शक्य उपपादयितुम्। तथाच न दर्पणार्पणप्रार्थि तदौपाधिकत्वमिति।

७७ नानात्वम्पुनर्न प्राकृतम्। **इदं कारणम्। इदं कार्य्यम्। एष कलशः। इदं करक**' मित्यादिविलक्षणप्रतीतिमात्रशेषस्य तत्तदवस्थान्तरलक्षणागन्तुकरूपहेतुकस्य भेदस्य—'**बहु स्या**' मित्यैच्छिकत्वात्। सर्गस्य रिरंसाप्रयोज्यत्वाद्रमणस्य च वैलक्षण्याभावेऽनुपपत्तेः। तथाच—'**सर्वं खल्विदं ब्रह्म। इदं सर्वं यदयमात्मा। वासुदेवः सर्वं**' मित्याद्या आत्माभेदेन सर्वावगाहिन्यः श्रुतिस्मृतयो नोपप्लवन्ते। विलक्षणप्रतीतिमात्रशेषत्वाच्च सह्यस्य तस्य वस्तुभेदापर्य्यवसायित्वान्न शुद्धाद्वैतसिद्धान्तसिद्धसिन्धुर आलानं लभते। सर्वपदोपादानेन नानात्वस्योपसञ्जिघृक्षितत्वात्। अन्यथेदम्पदोपादाने तदुपादानस्य विचेयप्रयोजनत्वापातात्। कुतः? सर्वत्वानुपपत्तेः। कथन्तर्हि—'**सर्वा पृथिवी**' ति प्रत्ययः? तत्तत्प्रदेशावगाहनात्तत्तदवच्छेदेन नानात्वात्। अन्यथा—'**घटमानये**' ति प्रेरितस्य प्रयोज्यस्य सर्वं वा किञ्चिद्वेति पिपृच्छिषासम्भवात्।

७८ अत्रैतदवधेयम्—यद्यपि कारणमेव कार्य्यन्तथापि न तत्त्वावस्थं कार्य्यत्वेन व्यवह्रियते। अनभिव्यक्तकार्य्यताकत्वात्। अभिव्यञ्जकतत्तदवस्थान्तरलक्षणागन्तुकरूपाभिसम्बद्धन्त्वेव कार्य्यत्वेन व्यवहार्य्यम्भवति। तच्च प्रागभिव्यक्तेः कारणात्मनैव सत्तावदित्युक्तम्। समवायश्च विशिष्टबुद्धिनियामकः सम्बन्धोऽवश्यमभ्युपेयः। सम्बन्धिद्वयनिर्वर्त्यत्वनियमाच्च तस्य भेदश्चाऽभ्युपेयः। स च तत्तदवस्थान्तरलक्षणागन्तुकरूपहेतुकोऽपि भगवदिच्छामात्रतन्त्रः। प्रागभिव्यक्तेः कार्य्यस्य कारणात्मना सत्तास्वीकारात्। तथाच तत्तदवस्थान्तरलक्षणागन्तुकरूपेण यदेव भगवदिच्छया तादृशविलक्षणप्रतीतिमात्राय भिद्यते तदेवाऽभिव्यञ्जकेन कारकव्यापारेण व्यवहार्य्यमभिसम्पाद्यते न पुनरितरदपि। श्रुत्यन्तरञ्च भवति—'**स द्वितीयमैच्छद्**'िति।

७९ उत्पत्तिः परिणामश्चेत्यनर्थान्तरमित्युक्तम्। अभिव्यक्तिश्च नाऽर्थान्तरम्। ध्वंसश्च तिरोभावसहकृता कार्य्यस्थितिप्रतिकूलाऽवस्थेत्यन्यत्र विस्तरः। तथाच सर्वेऽप्युत्पत्त्यादयो भावविकारास्तादृशभेदवत्येवाऽवसरं लभन्ते न तु कारणेऽपि। तत एव—'**द्वाविमौ पुरुषौ लोके क्षरश्चाऽक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत**' इत्याधिभौतिकाध्यात्मिकाधिदैविकानां क्षराक्षरपुरुषोत्तमानामैच्छिकं भेदमभ्युपयन्ती गीता ब्रह्मणस्त्रिरूपतामाह,—'**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाऽव्यक्तसंज्ञके। भूतग्रामः स एवाऽयं भूत्वा भूत्वा प्रलीयते। रात्र्याग-**

मेऽवशः पार्थ प्रभवत्यहरागमे । परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातनः । यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति । अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्त्तन्ते तद्धाम परमं ममे' ति तदनन्यत्वेऽपि सर्वभूतानामेव चोत्पत्तिप्रलयावाह । श्रूयते च–'तथाऽक्षरात्सम्भवतीह विश्वम् । यतो वा इमानि भूतानि जायन्ते–येन जातानि जीवन्ति–यत्प्रयन्त्यभिसंविशन्ती' ति । वस्तुतस्तु शुद्धेऽस्माकं ब्रह्मवादे ब्रह्मव्यतिरिक्तस्य प्रमेयस्याऽभावात्तदभेदेनोत्पत्त्यादिप्रतिसन्धानस्याऽऽवश्यकत्वे नास्त्येव किमपि प्रसजदवसरमवद्यम् । यदाहुस्तत्त्वदीपे श्रीमदाचार्य्यपादाः–'प्रमेयं हरिरेवैकः सगुणो निर्गुणश्च सः । गुणाः कार्य्यं तथा धर्मः क्रियोत्पत्त्यादयश्च स' इति ।

८० एतेन–'कारणमेव चेत्कार्य्यं किं कारकव्यापारसाध्यं स्यात् । सत्यपि कार्य्ये कार्य्योपयोगितया कारकव्यापारेण भवितव्यं चेत् ? सर्वदा कारकव्यापारेण नोपरन्तव्यम् । सर्वस्य सर्वदा सत्त्वेन नित्यानित्यविभागश्च न स्यात् । अथ कार्य्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाऽभिव्यज्यते । अतः कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चोच्यते । तदसत् । अभिव्यक्तेरभिव्यक्त्यन्तरापेक्षत्वेऽनवस्थानादनपेक्षत्वे कार्य्यस्य नित्योपलब्धिप्रसङ्गात्तदुत्पत्त्यभ्युपगमे चाऽसत्कार्य्यवादप्रसङ्गात् । किञ्च । कारकव्यापार-

स्याऽभिव्यञ्जकत्वे घटार्थेन कारकव्यापारेण कर-कादेरप्यभिव्यक्तिः प्रसज्यते । सम्प्रतिपन्नाभि-व्यञ्जकभावेषु दीपादिष्वभिव्यङ्ग्यविशेषनियमादर्श-नात् । न हि घटार्थमारोपितः प्रदीपः करकादीन्नाऽ-भिव्यनक्ति । अतोऽसतः कार्य्यस्योत्पत्तिहेतुत्वेनैव कारकव्यापारार्थवत्त्व' मिति,–'कार्य्यकारणयोरभेदे कार्य्यस्य कारणात्मकतया स्वस्मात्स्वस्योत्पत्तेरसम्भ-वात्स्वस्मिंश्च स्वस्य प्रध्वंसाऽघटनादुत्पन्नं कार्य्यं प्रध्वस्तं कलशकरकप्रभृतीति व्यवहारानुपपाद' इत्येष च काणा-दकलकलो निराकृतो वेदितव्यः ।

८१ यदपि श्रीमद्रामानुजाचार्य्या–अभिव्यक्तिः प्रद-र्शितदोषसंसृष्टेति न तामभ्युपगच्छन्ति, सत एव चोत्पत्त्यभ्युप-गमाय गरीयांसमायासमाश्रयन्ते, तदप्यविकस्वरवैदुष्यवन्धुर-मित्युपेक्ष्यम् । ऋजुणा मार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधना-योगात् । कथं वक्रिमा ? प्रत्युत प्रसजतान्दोषाणां दुष्परिहर-त्वात् । प्रतिबन्दित्वे हि युक्तीनामनुत्तरभूतत्वात् । विप्रतिषि-द्धञ्चाऽभिधानम् । यत्–'द्रव्यस्योत्तरोत्तरसंस्थानयोगः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः स्वावस्थस्य तूत्पत्ति'-रित्युत्पत्तिविनाशयाथात्म्यं व्युत्पाद्य–'संस्थानस्याऽसत उत्प-त्तावसत्कार्य्यवादप्रसङ्ग' इत्याक्षेपे तुल्यदोषशरीरं प्रतिबन्दि-मुदाहृत्य–'अस्माकं त्ववस्थानां पृथक्प्रतिपत्तिकार्य्ययो-गानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निर-वद्यम् । कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घट-

त्वावस्थावदेकत्वावस्थाप्रहाणेन बहुत्वावस्था तत्प्रहाणेनैकत्वावस्था चेति न कश्चिद्विरोध' इत्युच्यते। द्रव्यस्य तत्तदवस्थतायाः कारकव्यापारायत्तत्वस्याऽभ्यनुज्ञानात्तदेकहेतुकोदयविलयत्वे च,–'घटेनोदकमाहरे'त्यादिवाक्पूर्वकोदकाहरणादिव्यवहारस्य तत्साध्यत्वे च, संस्थानापरपर्य्यायाणामवस्थानां पृथक्प्रतिपत्तिकार्य्ययोगानर्हत्ववचनस्य विप्रतिषिद्धत्वात्। तथाच याथात्म्यस्याऽपि तथात्वम्। पृथक्प्रतिपत्तिकार्य्ययोगानर्हत्वाग्रहे विप्रतिषेधात्। अनेन–'कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेने'त्यादि वाक्यञ्च विप्रतिषिद्धं व्याख्यातम्। अथ स्वाश्रयमतिहाय स्थित्ययोगात्पृथक्प्रतिपत्तिकार्य्ययोगानर्हत्वमित्युच्यते, यथा मिथ्यावादिभिस्तदनन्यत्वमिति नाऽभेद उपेयते किन्तु भेदो व्यासिध्यते? तदपेशलम्। प्रतिज्ञादृष्टान्तोपरोधस्य प्रसङ्गात्। स्वाश्रयमतिहाय स्थित्ययोगेऽपि द्रव्यतः कारणभूतादवस्थानां पृथक्त्वात्। कार्य्यत्वधियस्तत्साध्यत्वात्। तथाच महतो भाष्यभागस्य विप्रतिषिद्धत्वम्। भिन्नाभिन्नाश्चेदवस्था अभ्युपेयन्ते? तर्हि नोत्पत्तिर्घटते। तदियं बलवती विप्रतिषिद्धता। अस्मन्मतप्रवेशश्च। अभ्युपेयते हि शुद्धब्रह्मवादिभिरवस्थानां भिन्नाभिन्नत्वम्। द्रव्यान्तरस्याऽनुपलब्धेरभेदः परस्परं भेदादभिव्यक्त्युत्तरकाले दर्शनाच्च भेद इति। एतदेव चैतासामागन्तुकत्वम्। न पुनरसतः सत्तेति दिक्। यथा च सरलः पन्थास्तथोपपादितं प्रागस्माभिः। इतरे च दोषाः सुपरिहराः। तत्कृतं विस्तरेण।

८२ इतश्च नेशते काणादाः कार्यस्य द्रव्यान्तरत्वं सिद्धान्तयितुम् । तथाच तत्प्रयोगः—'कार्यं कारणाद्भिद्यते । उत्पत्तिविनाशव्यवहारात् । यन्नैवं तन्नैवम् । तन्तुवदि' ति । गोष्ठीगुडभङ्गः पुनरयमुच्यते । सत्प्रतिपक्षितत्वात् । तथाच प्रयुञ्ज्महे—'न कारणात्कार्यं भिद्यते । सामानाधिकरण्यप्रतीतेः । यच्च भिद्यते न तत्र सामानाधिकरण्यप्रत्ययमुपलभामहे । न हि परस्परं भिद्यमाने तुरगे च क्रमेलके च सामानाधिकरण्यं प्रतीयते । विकृतिग्रहणाच्च । यदि पुनर्विकृतयो भिद्येरन्न तास्तर्हि कारणबुद्ध्या गृह्येरन् । न हि भिद्यमानस्तुरगः क्रमेलकबुद्ध्या गृह्यमाणः साक्षात्क्रियते । न चैतत्तथा । तस्मान्न तथे' ति ।

८३ सामानाधिकरण्यप्रतीतिरिह सारूप्यादिसम्पर्कशून्या विवक्षिता । तेन—'तानेव शाटकानाच्छादयामो ये मथुरायाम् । तानेव शालीन्भुञ्ज्महे ये मगधेषु । तदेवेदं भवतः कार्षापणं यन्मथुरायां गृहीत' मित्यादौ न व्यभिचारः । नन्वथाऽप्यवच्छेदकावच्छेदेन कार्यस्य तदनन्यत्वप्रतिपित्सायां पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावाद्भागासिद्धिरिति चेत् ? नैतदेवम् । शुद्धब्रह्मवादिनामविकृतपरिणामपुरस्कारेण प्रपञ्चतदनन्यत्वप्रतिपत्त्येकप्रयोजने श्रवणैकशेषे स्वार्थे प्रयोगे दुस्तर्ककलेवरस्य दोषस्याऽप्रयोजकत्वात् । परार्थे च श्रुतिसिद्धस्य तादृशः परिणामस्य तत्पुरस्कारेण तदनन्यत्वस्य च, बोधसौकर्य्यहेतुतया निदर्श्यमानेषु श्रुतिसिद्धेषु दृष्टान्तेषु प्रत्युत कणभक्षभिक्षोदरम्भरीणामुन्मिषति दुस्तर्ककर्कशे प्रतिभावैभवे, तत्सत्प्रति-

पक्षितत्वाय प्रदर्श्यमाने प्रयोगे, कार्य्यकारणपदाभ्यां कटकहाट-कादिविवक्षाया अनायाससिद्धत्वात् । उभयत्र वा कार्य्यकारण-पदयोः प्रपञ्चतत्कारणब्रह्मप्रतीतीच्छयोच्चारितत्वात् । अवान्तरयो-स्तयोरभेदाभिनिवेशे तु सांख्यतत्त्वकौमुद्याद्युपदर्शितानि प्र-योगान्तराणि मानम् । नच पूर्वतो विरोधः । तस्य सामानाधि-करण्यधीमात्रप्रतिबन्धकत्वात् ।

८४ नच प्रयोजकमपेक्षितव्यम् । श्रुत्युपष्टम्भत्वात् । न हि शतमपि श्रुतिविद्विष्टानि लिङ्गानि श्रुत्युपष्टम्भस्य सत्प्रतिपक्षितत्वाय प्रभवन्ति । समबलत्वाभावात् । वस्तुतस्तूत्पत्तिविनाशव्यवहारस्य सव्यभिचारेणाऽभिचरितत्वात्प्रत्युत सत्प्रतिपक्षितत्वसम्पत्तये खलु प्रयस्य । तथाच प्रयोगः—'कार्य्यं न कारणाद्भिद्यते । उत्प-त्तिविनाशव्यवहारात् । यच्च यतो भिद्यते न तस्य तत्रोत्पत्तिविनाशौ प्रतीयेते । न हि करकाद्भिद्यमानः करभस्ततश्च भिद्यमानं करकं तत उत्पद्यमानश्च तत्रैव प्रलीयमानश्च प्रतीयते । नचेदं तथा । तस्मान्न तथे' ति ।

८५ सिद्धान्ते तु प्रमाणान्तरानवसेयमर्थमनुसन्दधतां श्रुतिमात्र-शरणत्वान्न किञ्चिदेतत् । ततश्च श्रीकृष्णद्वैपायनपरमा-चार्य्यः शब्दतस्तदनन्यत्वं ब्रूते तत एव च सत्कार्यवादं स्थिरयति । यदाह—'तदनन्यत्वमारम्भणशब्दादिभ्य' इति । 'युक्तेः शब्दान्तराच्चे' ति च । युज्यते चैतत् । तत एव तु नैष तर्काप्रतिष्ठानकथनादन्यत्र साभिनिवेशो दृश्यते ।

८६ श्रीमद्रामानुजाचार्यास्तु—क्रियानिरोधादिभिरष्टा-भिर्हेतुभिः कारणात्कार्य्यस्य द्रव्यान्तरत्वमुपपादयतः काणादको-विदान् हेतूनां साधारण्यादिसम्पादनेनाऽभेदसाधकतया तर्कैरेव प्रतिपक्षन्ति। 'तदनन्यत्व' सूत्रञ्च—'तस्मात्परमकारणाद्ब्रह्मणः अनन्यत्वं जगतः आरम्भणशब्दादिभ्यस्तदु-पपादयद्भ्योऽवगम्यते। आरम्भणशब्द आदिर्येषां वाक्यानां तान्यारम्भणशब्दादीनी' ति च व्याचक्षाणा-स्तदाकाङ्क्षायाम्—'वाचाऽऽरम्भणं विकारो नामधेय'-मिति—'सदेव सोम्येदमग्र' इति—'अनेन जीवेनाऽऽत्मने'-ति—'सन्मूलाः सोम्येमाः सर्वाः प्रजा' इति—'ऐतदा-त्म्यमिदं सर्वं' मिति तान्युदाहरन्ति। अन्यानि चैवञ्जातीय-कान्यत्र तान्यभिप्रयन्ति। वाचारम्भणवाक्यञ्च व्याकर्तुमवतार-यन्तः—अत्र काणादवादेन कारणात्कार्य्यस्य द्रव्यान्त-रत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्य्यस्याऽनन्य-तामुपपादयति—वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति' इत्याहुः!!!

८७ वदतो व्याघातस्तावदिह स्फुटः। वैदुष्याभिनिवेशवि-जृम्भितञ्चैतत्। एकविज्ञानेन सर्वविज्ञाने प्रतिज्ञाते—'कथन्नु भगवः स आदेशो भवती' ति श्वेतकेतुचोदितेनोद्दालकेन तद्बोधसौकर्य्याय लोकप्रतीत्युपदर्शनेऽपि तत्र भवता श्रीकृष्ण-द्वैपायनपरमाचार्य्येण शब्दत्वेनैव दृष्टान्तादीनां हेतुत्वेनोप-न्यासात्। प्रमाणान्तरानवगम्यमर्थं प्रतिपित्सूनां शब्दैकशरणताया अनायासेन प्रतिपत्तये शब्दत्वसाधारण्येऽपि—'आरम्भणवा-

क्यादिभ्य' इत्यनुक्त्वा परमाचार्य्येण–'आरम्भणशब्दादिभ्य' इति कथनात्। अन्यथा प्रतीतेर्हेतुतयोपन्यासे वाधाभावात्। वस्तुतस्त्वारम्भणशब्द आदिर्येषां शब्दानामित्येष एव विग्रहोऽपि प्रतिष्ठते। आरम्भणशब्दस्य वाक्यानामनादित्वात्। 'यथा सोम्यैकेन मृत्पिण्डेने'त्यादीनामखण्डानामेव वाक्यत्वात्। वाक्याघटकत्वे सत्यादित्वविवक्षायान्तु सुतरां प्रकटं शब्दस्य हेतुत्वम्। तथाच सूत्रकृदाशयविरोधः। मुख्यस्यैव च हेतोर्लोकप्रतीत्या तदनन्यत्वोपपादकत्वे–'सदेव सोम्येदमग्र आसीदि' त्युपरिष्टाच्छब्देन तदुपपादनस्य तादृशशब्दमात्रश्रद्धालुपरितोषैकफलत्वप्रसक्तिः। तथाच भगवतो वेदस्य प्रामाण्यविप्लवप्रसङ्गः। प्रागुपदर्शितश्रुतिसूत्रस्मृतिविरोधश्च सुदुष्प्रतिरोध ः। अन्यथा चेत्? मुख्यस्याऽपि हेतोर्गौणत्वम्। तच्च–'प्रकृतिश्चे' ति सूत्रमुपष्टम्भितुं सूत्रमिदं प्रणयतस्तत्र भवतः परमाचार्य्यस्याऽभिमतमित्यशक्यवचनम्। वस्तुतस्तु–'इति' शब्द'नामधेय' पदयोरपि सञ्जिघृक्षितत्वात्तथा विग्रहः श्रेयानिति दिक्।

८८ तदेवमनभ्यस्ताभिभवभयसम्भ्रमः सिद्धस्तावदभेदः। परिहृतश्च तच्चोद्यं यदुत योगं विभज्य–'परिणामा' दिति सूत्रं व्याकर्त्तुमवतारयद्भिः श्रीमद्रामानुजाचार्य्यैः–'सत्यं ज्ञानमनन्तं ब्रह्म। आनन्दो ब्रह्म। अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः। निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। स वा एष महानज आत्माऽजरोऽमर इति स्वभावतो निरस्त-

समस्तचेतनाचेतनवर्त्तिदोषगन्धस्य निरतिशयज्ञाना-नन्दैकतानस्य परस्य ब्रह्मणो विचित्रानन्तापुरुषार्था-स्पदचिदचिन्मिश्रप्रपञ्चरूपेणाऽऽत्मनो बहुभवनसङ्क-ल्पपूर्वकं बहुत्वकरणं कथमुपपद्यत' इत्युपक्षिप्तम्। सिद्धान्ते तदनुसारसम्भवात्प्रतितथानुरोधित्वेऽप्यनुपेक्ष्यत्वात्। समाधिभाषोपबृंहितात्प्रजायेयेत्याकारान्तरात्। तदुपव्याख्यान-रूपात्प्राकृतप्रीतेरवास्तवत्वव्यवस्थापनात्। तत्रैव तादृशात्साध्वसा-ध्वकरणकरणद्वारा तापोत्पादकयोः पुण्यपापयोरात्मत्वेन विद्वद्दर्श-नस्य श्रावणाच्च। एवमन्यतोऽपि।

८९ एतदुक्तं भवति—प्रपञ्चान्तःपाते हि दोषा वास्तवाः स्युः। वस्तुत्वात्तस्य। महानेव भेदः पुनः प्रपञ्चसंसारयोः। प्रथ-मस्य ब्रह्मोपादानकत्वं मायाकरणकत्वमुत्तरस्य च निरुपादानक-त्वमविद्याकरणकत्वमिति। अविद्या च—'ऋतेऽर्थं यत्प्रतीयेते'-त्यत्र द्वितीये सिद्धा—'स्वरूपाज्ञानमेकं ही' ति तत्त्वदीपप्रति-पन्नान्तःकरणाध्यासादिपञ्चपर्वा विद्याविपरीता सम्पत्। सा च क्रीडौपयिको ब्रह्मणः शक्तिविशेषः। 'स वै नैव रेमे' इति श्रुतेः प्रपञ्चात्मनाऽऽविर्भावस्य क्रीडार्थत्वात्तत्र वैचित्र्यस्याऽऽव-श्यकत्वात्तया जीवस्य संसार इति। संसारो नाम तादृशतच्छक्ति-करणको जन्ममरणादिपरम्पराजनकः—'कृशोऽहं, पुष्टोऽहं, काणोऽहं, सुलोचनोऽहं, क्षुधितस्तृप्तो जानामी' त्या-दिर्देहादिधर्माध्यासः। ये चाऽमी दोषा न संसारतस्तेऽतिरिच्यन्ते। अहन्त्वममत्वात्मकत्वात्। मिथ्या चाऽयमभिमत्यात्मकत्वादि-त्यरसाञ्जनसापेक्षम्। यदाह—'यथा मनोरथधियो विषया-

नुभवो मृषा । स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मन' इति । ततश्च न कश्चन प्रश्नमुपयाति नित्यनिर्दुष्टाद्भुताचिन्त्यनिरङ्कुशनिरतिशयैश्वर्य्यशालिनो निरस्तसाम्यातिशयस्वाभाविकानन्तविचित्रशक्तिमतो निखिलकल्याणगुणगणक्षीरकलशोदधेरानन्दनिधेः सर्वज्ञस्य ब्रह्मणः संसरतां जीवानां प्रतीत्या महिमा किन्तु तैस्तैर्मनसाऽप्याकलयितुमशक्यैः शक्त्युन्मेषैः प्रत्युतोपचीयत एवेत्यपाणिन्धमो नः पन्थाः । चोद्यान्तरं पुनः—'अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्त्तेत' इत्यादिवचनसुबोधिनीव्व तद्व्याख्याश्च परमार्थतः परिशीलयता यत्सत्यमीपत्प्रतिविधानमिति ।

१० तत एव सात्त्वताः प्राहुः—'पञ्चात्मकः स भगवान्द्विषडात्मकोऽभूत्पञ्चद्वयीशतसहस्रपरामितश्च । एकः समोऽप्यखिलदोषसमुज्झितोऽपि सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूत् । निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च त्रिविधभेदविवर्जिताऽऽत्मे' ति । पञ्चात्मक इत्यादि । अपिः सर्वत्र समुच्चयार्थोऽत्यन्तविरुद्धत्वेऽप्यविरोधबोधनाय । स्यादेतत् । अथ कथन्तन्मन्तव्यम् ? इत्यत आहुः—निर्दोषेत्यादि । तथाच मूलरूपस्यैवंविधत्वाद्विभूतिरूपस्याऽपि तथात्वमेव मन्तव्यमिति सारार्थः । एवञ्चाऽऽत्मविषयिकायाः कृतेरेव समस्तविप्रतिपत्तिप्रत्यूहत्वेऽपि तथाऽन्यथा प्रतिपन्नाः श्रीमद्रामानुजाचार्य्या न खलु न सशङ्कमानाः । अखिलशक्तिधृतस्तस्य स्वरूपाविपरीतानवद्यास्पदप्रपञ्चरूपेण कृतेरभ्युपगमाच्च न विकारपदाभिलप्यस्त-

त्परिणामः किन्त्वविकृत एवेत्युत्तुङ्गगिरिशृङ्गानारोहसुनिरूपम् । तथा सत्यविद्यापिशाचावेशविवर्त्त एवाऽयं भवतः प्रज्ञापराधो यदुत शुद्धाद्वैतसिद्धान्ताभ्यसूयेत्यप्रार्थितप्रदीपप्रकाशम् ।

९१ एतच्चोपसंख्यानम्–**श्रीमत्कृष्णद्वैपायनपरमाचार्य्यै**स्तावत्समन्वयाविरोधाभ्यां कार्य्यस्य कारणानन्यत्वादि व्यवस्थाप्य सर्वत्र वेदान्तेष्वेकमेव ब्रह्म प्रतिपाद्यमिति निर्णीय, साधनाध्यायप्रथमचरणेन मोक्षान्तरङ्गसाधनज्ञानभक्तिसम्पत्तयेऽधिकारिणो योग्यं देहं निरूप्य, द्वितीयस्य–'**मुग्धेऽर्धसम्पत्तिः परिशेषा**' दित्यन्तैर्दशभिः सूत्रैः पञ्चाग्निसाधितदेहयुक्तस्य भगवज्ज्ञानरहितस्य ज्ञानाधिकारितां च विनिश्चित्य, ज्ञानाधिकारिविचारोत्तरं ज्ञानविषयनिर्द्धारो युक्त इति तदर्थमवसरसङ्गत्या विवक्षितज्ञानविषयस्य ब्रह्मणः पादशेषेणाऽग्रिमेण च पादेन स्वरूपं विचारयन्ब्रह्मधर्मविरोधं परिजह्रे । तत्र स्वरूपाविरुद्धान्परस्परविरोधेन प्रतीयमानान्धर्मानग्रिमेण चरणेन विचारयिष्यन्पादशेषेण जडजीवधर्मत्वेन प्रतीतान्विचारयति । संशयस्तु–किमुभयलिङ्गमन्यतरलिङ्गं वा ब्रह्मेति । बोध्यन्ते हि ब्रह्मणि क्वचिज्जडजीवधर्माः प्रतिषिध्यन्ते च क्वचित् । यथा–'**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस**' इति । '**अस्थूलमनण्वह्रस्व**' मिति ।

९२ तत्राऽऽह पूर्वपक्षी–निर्विशेषलिङ्गं ब्रह्मेति । नच जडजीवधर्मा एव नैते भवन्तीति प्रकरणावरुद्धत्वादास्थेयम् । उच्चावचकर्मत्वादीनां तयोरेव प्रत्यक्षतः प्रतीयमानत्वात् । नच लौकिकप्रमाणापेक्षया श्रुतेः प्राबल्यादन्यथाप्रतीतिरपेत्यभ्युपेयम् । अतिप्रसङ्गात् । जीववैलक्षण्यं ह्यनुशास्ते–'**नेतरोऽनुपपत्ते**' रि-

त्यादि । तथा सति जीवसालक्षण्यं दुर्वारमित्यपरिहार्य्यः शास्त्र-विरोधः । अशक्यवचनाश्च कारणे कार्य्यविशेषधर्माः । व्यवहारभङ्गो हि तदानीं दुष्परिहर इति । नच कारणधर्माणां कार्य्येऽनुवृत्ति-नियमान्नैतदेवम् । वैलक्षण्यवचनविरोधात् । श्रूयते हि—'अस्थूलमनण्वह्रस्व' मित्यादि । एवञ्च धर्मविधिरुपासनार्थत्वेनोपपन्नगतिक इति प्रयोजनान्तरशून्यः प्रतिषेधः स्वरूपबोधनमात्र-फलक इति ग्रासकालमिति ।

९३ अत्र—'**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि । न भेदादिति चेन्न प्रत्येकमतद्वचनात् । अपि चैवमेक**' इति सूत्रत्रितयेन केषाञ्चिदेकदेशिनां मतमनूद्य दूषयित्वा—'**अरूपवदेव हि तत्प्रधानत्वात् । प्रकाशवच्चाऽवैयर्थ्यात् । आह च तन्मात्रम् । दर्शयति चाऽथो अपि स्मर्य्यते । अत एव चोपमा सूर्य्यकादिवदि**'-ति पञ्चभिः सूत्रैः परस्यैकदेशिनो मतेन विरोधपरिहारं च प्रदर्श्य सिद्धान्तेन विरोधं परिजिहीर्षन्नादित एकदेशिनम्—'**अम्बुवदग्रहणात्तु न तथात्व**' मित्येकेन सूत्रेण परिहृत्य स्वमतमाह—'**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेव**' मिति । '**महानवकाशोऽल्पोऽवकाश**' इति लौकिकस्य—'**यथाऽवकाशं दश चमसानि**' ति वैदिकस्य च व्यवहारस्य वस्तुधर्म-विरुद्धत्वेऽप्याकाशस्य करकाद्यन्तर्भावाद्विभुत्वाल्पत्वयोरैकाधिकरण्येन प्रामाणिकादरणीयत्ववद्ब्रह्मणोऽप्युपाध्यन्तर्भावात्तदभिव्यङ्ग्यसर्वकर्मादिधर्मवत्त्वमित्यर्थः । न चौपाधिकत्वप्रसक्तिः । जपाकुसुमलौहित्यवदन्यधर्मत्वेन श्रुत्या प्रत्यायितत्वाभावात् ।

१४ नन्वेवमुपाधिसम्बन्धेनाऽभिव्यज्यमानत्वे नैमित्तिकत्वादागन्तुकत्वमेव घृतद्रवत्ववदित्यस्वाभाविकत्वे सृष्टेः प्राग्ब्रह्मणो निर्विशेषत्वापातस्ततश्च—'**सोऽकामयते**' त्यादेः पीडाप्रसङ्ग इत्यत आह—'**दर्शनाच्चे**' ति। इहोभयसामञ्जस्यादेवमिति पदद्वितयं पूर्वतः सूत्रादनुवर्त्तते। चकारो वुद्धिस्थं समुच्चिनोति। तथाच तत्तत्केवलब्रह्मबोधकश्रुतिषु तत्तद्धर्मदर्शनात्प्रत्यक्षतोऽपि भानात्स्मृतौ च विरुद्धसर्वधर्माश्रयतायाः सिद्धत्वाद्ब्रह्म एवं यथा प्रतीयते तादृशम्। तथैवोभयसामञ्जस्यात्। प्रतीयन्ते हि ब्रह्मणि सर्वे विरुद्धधर्माः। यथा श्रुतिषु—'**यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्। आसीनो दूरं व्रजति शयानो याति सर्वतः। तदात्मानꣳ स्वयमकुरुते**'-त्येकस्याऽव्यक्तरूपस्याऽनन्तरूपत्वमासीनस्य दूरगमनं शयानस्य सर्वतो यानमद्वितीयस्य च कर्तृत्वकर्मत्वादीनि। प्रत्यक्षत उलूखलबन्धनादौ ब्रह्मणः प्रसिद्धं विरुद्धधर्माश्रयत्वम्। भगवती श्रीयशोदा बहूनि दामानि सन्दधत्यपि न भगवन्तं बन्धुमपारयत्स्वरूपञ्च प्रादेशमात्रमेयमध्यमेवाऽपश्यदिति। एवं सति विस्मयसामञ्जस्यात्। मृद्भक्षणप्रसङ्गे च सुविस्पष्टमेव तथात्वम्। '**एवं विदिततत्त्वायां गोपिकायां स ईश्वरः। वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभु**' रिति तत्रोक्तेः। स्मृतेश्च तावन्मिथिलागमने सिद्धमेतत्। स्मर्य्यते किल तत्र श्रुतदेवजनकयोरेककालावच्छेदेन सद्मनि प्रवेशादिकम्। तत्र प्रत्यक्षश्रुतिसिद्धे प्रत्यक्षसिद्धे स्मृतिसिद्धे च ब्रह्मणो विरुद्धधर्माश्रयत्वेऽनुपपत्तेरप्रमत्तेन वक्तुमशक्यत्वाद्वस्तुस्वभावानुरोधेन दर्शनस्येच्छा-

नुग्रहादिहेतुकत्वनिर्बन्धेन च तादृशनिश्चयस्य प्रामाणिकत्वेऽव-गन्तव्ये सर्वकर्मत्वादीनां नैमित्तिकत्वेनाऽऽगन्तुकत्वोत्प्रेक्षणम-प्रयोजकमित्यर्थः ।

९५ स्यादेतत् । निदर्शितदर्शनस्य स्वेच्छाव्यवहार्य्येऽवतीर्णे प्रपञ्चसलक्षण एव प्रतीयमानैकधर्मविरुद्धधर्मान्तरविषयत्वात्तु नेद-मस्थूलादिश्रुतिसिद्धयावद्धर्मानाश्रयताके प्रपञ्चविलक्षणे ज्ञानाकारे तद्विपरीतधर्माश्रयत्वमुपपादयितुमलङ्कर्मीणं किमुत विरुद्धसर्वधर्मा-धारत्वम् । तथा सति कथं तत्र धर्मविधिनिषेधयोरविरोधः प्रती-यताम्? तत्राऽऽह—'**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय**' इति ।

९६ मा स्म तावदशीलितश्रुतिरहस्य! विरोधमुत्प्रेक्षिष्ठाः । भ्रान्तिरेषा यदुताऽस्थूलादिश्रुत्या यावद्धर्मानाश्रयत्वं ब्रह्मणः प्रति-पद्यसे । यत्किल सोम्य! प्रतीतमेव प्रतिषेध्यं नाऽप्रतीतम् । अयो-गात् । तत्राऽपि न श्रुतिप्रतीतम् । विप्लवापत्तेः । तथाच निर्विशेषब्रह्म-समर्पकत्वेनाऽभिमता श्रुतिः प्रातीतिकप्राकृतधर्ममात्राभावं ब्रह्मण्याह न पुनः सर्वकर्मादिसविशेषश्रुतिसमर्पितसर्वकर्मत्वाद्याजानिकाप्रा-कृतधर्माभावमपीत्यप्राचीरपरीतम् । अनिर्मृष्टमतयः पुनर्नामसाम्येन भ्रान्ता आशामोदकचर्वणासुखमाशीलयन्तु । तदेतदुक्तम्—'**प्रकृ-तैतावत्त्वं हि प्रतिषेधती**' ति । प्रकृते गार्ग्युपक्रान्ते प्रपञ्चे गार्गिप्रश्ने वा, यदेतावत् प्रतीयमानयावत्प्राकृतपदार्थास्तद्धर्मानेव निषेधतीत्यर्थः ।

१७. युक्तश्चैतत् । न हि यद्यत्र यदा येन प्रतिषिध्यते तत्तत्र तदैव तेन विधातुं शक्यम् । विशिष्य च निरुपप्लवप्रामाण्यया श्रीमत्या श्रुत्या । दृश्यते तु सा तथा विदधती । तथाहि–'**यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे**' ति श्रुतिः पूर्वार्द्धेन ज्ञानकरणाप्राप्तिप्रतिपादनापदेशेन ज्ञानं प्रतिषेधति । '**आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने**' त्युत्तरार्द्धेन विदुषः कुतश्चिद्भयराहित्यमाचक्षाणा च तद्विधत्ते । अस्थूलादिश्रुतौ च–'**अवागमन**' इति–'**अमुख**' मिति च प्रशासनसाधनव्यासेधमुखेन प्रशासनं प्रतिषिध्यमानमपि–'**एतस्यैव प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत**' इत्यादिना विधीयमानमनावृतम् । तत्रैव च स्थौल्यादिसर्वधर्माभावव्यपदेशमपदिश्य ब्रह्मणो वेद्यत्वमपोह्यते तत्रैव पुनरवसरे–'**य एतद्विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मण**' इति तद्विधीयते । एवं–'**न तदश्नोति कश्चने**'ति तत्रैव व्याप्तिर्व्यासिध्यते । सैव च–'**आकाश ओतश्च प्रोतश्चे**' ति प्रतिपाद्यते । तथाच निर्विशेषत्वमपि तर्ह्यघटिष्यत यदि श्रुतिर्धर्मानपोह्यैव न्यवर्तिष्यत । निवर्त्तते पुनस्तान्भूयो विधाय । तस्मात्प्रातीतिकान्प्राकृतान्धर्माञ्छ्रुतिः परिहरति तांस्तानप्राकृतान्स्वरूपधर्मांश्च विधत्त इति युक्तेयं व्यवस्थितिः । एवञ्चोपाख्यानान्तरश्रुतयोऽपि तादृश एव धर्मान्विदधत्यो नाऽस्थूलादिवाक्येभ्यो विरुध्यन्त इति न कश्चन विरोधो नचोभयप्रामाण्यसम्पातो न वा निर्विशेषत्वनिबन्धनास्तास्ता उत्प्रेक्षा अवसरमासादयन्ति । तदिदं समाहृतम्–'**ततो ब्रवीति च भूय**' इति । विस्तरः पुनर्विद्वन्मण्डनादाववसेयः ।

१८ एवं वस्तुस्वभावतो विरुद्धसर्वधर्माश्रयत्वमाश्रित्य, तादृ-क्स्वभावत्वं वस्तुनोऽनभ्युपयतः प्राकृताप्राकृतविभागरूपया युक्त्या च निर्णयमुपचित्य, शब्दबलोपाश्रितेनैकेनाऽधिकरणेन विरोधे व्युदस्तेऽपि, कैश्चनार्षिभिरर्थबलेन विचारस्याऽभ्युपयनात्स्वसिद्धान्ते तस्याऽनावश्यकत्वेऽपि निर्विशेषत्वे तत्पक्षपातो मा प्रसाङ्क्षीत्स-विशेषश्रुतिपीडाप्रसञ्जक इति तदवलम्ब्य विरोधापविवदिषया द्विसूत्रमधिकरणान्तरमारचयन्नेकेन सूत्रेण पूर्वपक्षयति—'तदव्य-क्तमाह ही' ति ।

१९ 'न चक्षुषा गृह्यते नाऽपि वाचा । कश्चिद्धीरः प्रत्यगात्मानमैक्षत् । सर्वे वेदा यत्पदमामनन्ति । अ-प्राप्य मनसा सह । मनसैवैतदाप्तव्यम् । अस्पर्शम-गन्धमरसम् । सर्वरूपः सर्वगन्धः सर्वरसः। अपाणि-पाद इत्यादि । विश्वतश्चक्षुरित्यादि । निर्गुणश्च । यः सर्वज्ञः सर्वशक्ति' रित्येतत्प्रभृतिविप्रतिषिद्धश्रुतिदर्शनाद्विमर्शः—किम्प्रतिपत्तव्यमिति । नन्वनवसरपराहतो विमर्शः । विप्रतिषेधस्यै-वाऽभावात्? सत्यम् । विरोधोत्थानं तु नाऽपवर्त्तते। शब्दसं-श्रयस्यैव प्राङ्निरासात्। तथा सत्युभयीनां प्रामाण्यस्याऽपराहतत्वा-दुभयविधं ब्रह्मेति प्राप्नोति । तदसत्। वस्तुनो द्वैरूप्यासम्भवात् ।

१०० स्यादेतत्। अथापि प्रमाणान्तरमनुरुध्याऽन्यतरासां स्वार्थे प्रामाण्यं शेषाणाञ्चोपचरितार्थत्वमिति युक्तम्? एवमेतत् । निर्णयः पुनर्विमर्ष्टव्यः। न तावत्सविशेषश्रुतीनां स्वार्थे प्रामाण्यं शक्याश्रयम्। अनुभवविरोधात् । न किल केनाऽपि चक्षुषा मनसा वा ब्रह्म साक्षात्कृतमस्ति । यदि सर्वरूपं ब्रह्म भवेत्सर्वं एव तत्साक्षा-त्कर्त्तुं शक्नुयुः । तथाच सर्वधर्मवत्त्वेन ब्रह्म समर्पयन्त्य उपचरि-

तार्थाः शेषांश्च श्रुतयः स्वार्थे प्रमाणमित्ययत्नगम्यम् । तदेतदुपसंहृतम्–'**तदव्यक्त**' मित्यादिना । हि श्रुतिप्रत्यक्षाभ्यां हेतुभ्यां श्रुतिराह ततस्तदव्यक्तमित्यर्थः । श्रुतिस्तावत्–'**नेति नेत्यात्मा अग्राह्यो न हि गृह्यत**' इति । प्रत्यक्षन्तावत्–'**न हि गृह्यत**' इत्यनुभवसाक्षिकं प्रमाणम् ।

१०१ सिद्धान्तयति–'**अपि संराधने प्रत्यक्षानुमानाभ्या**' मिति । मैवममनीषिन्नन्यथा मंस्थाः । न किल स मान्द्यमतिवर्त्तते य एवमाह । दृश्यते हि समीच्या सेवया परितुष्टं ब्रह्म । तथा सत्यप्रयोजकः केवलानुभवविरोधः । निर्बलत्वेऽपि लौकिकतया केवलस्य प्रत्यक्षादेः साधनबलसिद्धस्य तस्याऽलौकिकत्वेन प्राबल्यात् । श्रूयते हि–'**श्रद्धाभक्तिध्यानयोगादवेही**' ति । '**यमेवैष वृणुते तेन लभ्य**' इति च । स्मर्य्यतेऽपि च–'**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तपे**' ति ।

१०२ अत्र प्रथमं वाक्यं कैवल्योपनिषदि श्रूयते । एतत्साधनेन जानीहीत्याश्वलायनः परमेष्ठिनाऽत्रोपदिष्टः । ब्रह्म च ज्ञानगोचरः सर्वदेवतादिमयं शिवाकारं निराकारञ्च तत्रोपदिष्टम् । द्वितीयञ्च काठके च मुण्डके च पठ्यते । तत्र प्रथमे–'**आसीनो दूरं व्रजती**' ति–'**अशरीर ँ शरीरेष्वि**' ति च तत्पूर्वतः श्रूयते । तथाच निष्प्रतिरोधस्तत्राऽपि साकारनिराकारत्वयोर्लाभः । इतरत्राऽपि विरुद्धसर्वधर्माधारं ब्रह्म प्रस्तुत्य तत्पाठात्–'**तनु ँ स्वा**' मिति वचनाच्च साकारत्वलाभ इति तदुभयलाभो विस्पष्टः । शेषं व्यक्तम् ।

१०३ एवञ्चोभयविधमपि रूपं दृश्यत इति श्रुतिस्मृत्युक्त-संराधकीयप्रत्यक्षानुरोधेन निर्णये विचारिते साकारञ्च निराकारञ्च ब्रह्म फलति न पुनरव्यक्तमात्रमिति तथा पूर्वपक्षः सर्वथाऽपि मूर्खत्वप्रयोजक इति नाऽत्र सन्देहावसरः । तदिदमुपपादितम्— **'अपि संराधन'** इत्यादिना । यद्वा । **'ततस्तु तं पश्यते निष्कलं ध्यायमानः । अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूप'** मिति साक्षात्कारादनुमितेश्च प्रत्यक्षानुमानाभ्यां वा ब्रह्मणस्तथा निश्चयात्केवलाव्यक्तपक्ष उपेक्ष्य इत्यर्थः । अनुमापका हि ध्रुवादयः सिद्धाः ।

१०४ एवं लौकिकालौकिकप्रत्यक्षविषयादर्थस्वभावादविरोधं व्यवस्थाप्य साधनानां ज्ञानार्थतोक्त्या ब्रह्मणश्च दुर्ज्ञेयत्वश्रुत्या संराधकप्रत्यक्षेण ब्रह्मस्वभावावधारणे संशयादौपनिषदस्य ब्रह्मणः श्रुत्यवगतस्वरूपबलेनैवोभयरूपवत्त्वं द्रढयितुमुपोद्घातसङ्गत्या त्रिसूत्रमधिकरणान्तरमारभमाण एकेन सिद्धान्तं वक्ष्यन्द्वाभ्यां भक्तप्रत्यक्षेण न निर्णयः श्रुत्याऽपि नेत्येतत्पूर्वपक्षद्वयं क्रमश आह— **'प्रकाशादिवच्चाऽवैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् । अतोऽनन्तेन तथा हि लिङ्ग'** मिति ।

१०५ न तावत्संराधकप्रत्यक्षनिर्बन्धेन वाक्यानां विप्रतिषेधः प्रतिषेद्धुं शक्यः । निर्णयो हि वस्तुशक्तेरनुरोधमपेक्षते न श्रुतिप्रत्यक्षयोः । अन्यथा प्रकाशजलसुवर्णप्रभृतीनां प्रतिबन्धकाभावान्नानाविधत्वाभ्युपगमापातो दुर्निवारः । सुप्रतीता हि सूर्य्यचन्द्रमणिप्रकाशे च हिमतप्तकुण्डादिजले चोष्णशीतानुभवरूपाः स्पर्शा नानाविधाः । सुवर्णे च वर्णभेदा न विशिष्य वर्णनीयाः । तथाच यथा न तत्र सर्वेषां तेजस्त्वादिस्वभावहानिभयात्स्वाभाविकत्वं

शक्याश्रयन्तथा ब्रह्मणोऽप्यवैशेष्यमनासंञ्जितशृङ्खलम् । प्रसिद्ध्यति हि सर्वत्र ब्रह्मणो निर्विशेषत्वम् । श्रूयते च- '**नेति नेत्यात्मा अग्राह्यो न हि गृह्यत**' इत्यादि । तदिदमुक्तम्- '**प्रकाशादिवच्चाऽवैशेष्य**' मिति ।

१०६ नन्वेवं संराधकीयस्तथा साक्षात्कारस्तादृशी श्रुतिश्च व्याकुप्येताम्? मैवम् । तपःप्रणिधानादिषु यथा तत्कामस्तथा ब्रह्मणः प्रकाशात् । प्रतिभक्तं प्रतिकर्म चाऽऽविर्भावात् । तथाच यदि ब्रह्म न बहून्वारानाविरभविष्यदभ्युपागमिष्यताऽपि तदा तस्य तद्रूपत्वम् । न चैवमस्ति । प्रकाशश्च तावता कृतकप्रकाशवन्न स्वाभाविकः । असार्वदिकत्वात् । तथाच न संराधकीयसाक्षात्कारेण ब्रह्मस्वभावः शक्यावधारणः । तदेतदुपकल्पितम्- '**प्रकाशश्च कर्मण्यभ्यासादि**' ति । चकारः प्रकाशाभावान्यथाप्रकाशयोः सङ्ग्राहकः ।

१०७ इत्थञ्च—निमित्तभेदव्यतिरेकेणैकस्य वस्तुनः प्रतिक्षणमन्यादृशत्वायोगादावृत्तेस्तैस्तै रूपैर्ब्रह्मण आविर्भाव इति फलति । संराधकीयः कामश्च क्वचिन्निमित्तं प्रतीतम् । निमित्तभेदेन च जायमानं न वस्त्विति शक्याभिलापम् । किन्तर्हि? विग्रह इत्येव । युज्यते चाऽयमर्थः । यदाह समाधिभाषा- '**यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये**' ति । तथाच तत्तद्वाक्येषु शरीरविशिष्टं ब्रह्मोपक्रम्य पठितानां तत्तद्धर्माणां शरीरधर्मत्वस्य तदभिव्यङ्ग्यागन्तुकधर्मत्वस्य वा स्वीकार्यत्वेन- '**अपागादग्नेरग्नित्व**' मितिवत्कार्यत्वमेव न वस्तुत्वम् । अनागन्तुकानारोपितस्वरूपत्वात्तस्य । ततश्च श्रुत्याऽपि तथा

निर्णयाभावात्सर्वागोचरो ब्रह्मेत्येवं प्राप्नोति । तदिदं संगृहीतम्—'अतोऽनन्तेने' त्यादिना ।

१०८ सिद्धान्तमाह—'**उभयव्यपदेशात्त्वहिकुण्डलवदि**' ति । तुः पक्षं व्यावर्त्तयति । न तावदेवं केवलया युक्त्या लोकदृष्टान्तेन च निर्णयः शक्यक्रियः । विचारशास्त्रस्याऽस्य वैयर्थ्यप्रसक्तेः । श्रुत्यैव ब्रह्मस्वरूपज्ञानं प्रमितिरूपं न लौकिकैः प्रमाणैर्न्यायैर्वेत्येष एवेह दर्शनान्तराद्विशेषः । उपचारमपचर्य्य श्रौततात्पर्य्यज्ञापनस्य प्रवृत्तिनिमित्तत्वात् । तच्च जन्माद्यधिकरण एव शास्त्रयोनित्ववचनान्निर्णीतपूर्वम् । अतः श्रुतिं विना स्वरूपस्य तच्छक्तेश्चाऽनवबोधात्कः प्रकारो येन स्वरूपशक्त्या निर्णय इत्यर्थः ।

१०९ ननु केवलया स्वरूपशक्त्या निर्णयं नाऽऽचक्ष्महे किन्तु श्रुत्युपष्टब्धयेति चेत्? तत्राऽऽह—**उभयव्यपदेशात्** । उभयोर्विरुद्धधर्मयोर्व्यपदेशस्तस्मात् । यत्र तावदस्थूलादिश्रुतौ निर्गुणत्वेन ब्रह्मणो व्यपदेशस्तत्र—'**आकाश ओतश्च प्रोतश्चे**' ति कार्य्यगुणजनकानन्तगुणवत्त्वमपि तस्य बोध्यते । यत्र च शारीरब्राह्मणे—'**स एष नेति नेत्यात्मे**' त्याद्युच्यते तत्र—'**स वा अयमात्मा सर्वस्य वशी सर्वस्येशान**' इत्यादि पूर्वतः—'**स वा एष महानज आत्मे**' त्याद्यन्ततश्च पठ्यते । श्वेताश्वतरे च—'**साक्षी चेता केवलो निर्गुणश्चे**' ति श्रवणोत्तरम्—'**एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोती**' त्यादि श्रूयते । एतास्वेवंविधास्वन्यासु च श्रुतिषु निर्गुणत्वेनाऽनन्तगुणत्वेन सर्वविरुद्धधर्मेण रूपेण व्यपदेशात् । तथाच धर्मनिषेधमुखेन यथा निर्विशेषश्रुतयस्तथा धर्मविधिमुखेन सविशेषश्रुतयोऽपि ब्रह्मस्वरूपं निरूपयन्तीति कासा-

ञ्चिदुपजीव्यत्वमन्तरङ्गत्वमितरासामुपजीवकत्वं बहिरङ्गत्वमिति नि-र्णयस्याऽशक्योक्तिकत्वादुभयोरपि तुल्यबलत्वेनोभयरूपमेव ब्र-ह्मेत्यर्थः ।

११० स्यादेतत् । अनुपपत्तिः पुनः प्रवर्त्तते उभयलिङ्गत्वे प्रकाशवैलक्षण्यायोग इति । प्रकाशते हि तस्य तथाऽन्यस्य चेत-रथा ब्रह्म? तत आह—**अहिकुण्डलवत्** । यथा सर्पः स्वसा-मर्थ्यात्सरलः कुण्डलश्च स्वरूपतः संस्तथा तथा प्रकाशते ब्रह्माऽप्य-नाकलनीयशक्ति तथा स्वरूपत उभयलिङ्गं तथा तथा विलक्षण-माविरस्ति । विषम उपन्यासः । कालभेदेन स्वेच्छया सर्पस्य तथा प्रकाशः संराधकेच्छया त्वेकस्मिन्क्षणे ब्रह्मण इति? मैवम् । संरा-धकस्य तादृशेच्छोत्पत्तौ तादृशतादृशफलदित्सायाः प्रयोजकत्वात् ।

१११ वस्तुतस्तु—नेदं बाधितम् । श्रुत्येकसमधिगम्यत्वात् । कल्पनाशास्त्र एव तु तथैतदनेककल्पनागौरवञ्च । नच शास्त्रानारम्भ-प्रसङ्गः । तथा साधनार्थत्वात् । अत्रैव सूरिव्यामोहाच्छास्त्रान्तर-प्रवृत्तेर्विरुद्धशास्त्रसम्भेदजन्यदोषनिवारणस्याऽऽवश्यकत्वात् । अ-नुपपन्नमिति हि नः क सम्प्रत्ययो न यत्प्रमाणेनोपलभ्यते । न चेदं तथा । श्रुतदृष्टत्वात् । तदुक्तं युक्त्या ।

११२ विरुद्धशास्त्रसम्भेदेन व्यामुह्यतस्तु समाधातुं **श्रीम-त्कृष्णद्वैपायनपरमाचार्य्येण** युक्तिरुपाश्रितेत्यत्रापि दृष्टान्ते ऋजुकुण्डलभावो नैककालावच्छेदेनेति युक्त्यन्तरमाहुः **श्रीम-दाचार्य्यपादाः—'लोकेऽपि शरीरान्तःकरणादीनि परस्परविरुद्धदयामारकत्वादीनि विषयभेदेनैकस्मि-न्क्षणे प्रतीयन्त'** इति । तथाच शरीरादीनां विषयभेदेन तथा-त्ववत्संराधकभेदेन ब्रह्मणोऽपि प्रकाशवैलक्षण्यमित्यर्थः । तेन—

**'तत्तद्वपुः प्रणयसे'** इति न निर्माणं किन्तु तच्चक्षुर्मनोगोचरत्वसम्पादनमित्यरसनास्पन्दसुबोधम् । अपूर्वञ्च नैतत् । **'श्रुतेस्तु शब्दमूलत्वात् । सर्वोपेता च तद्दर्शनात् । लोकवत्तु लीलाकैवल्य'** मित्यादिषु प्रतिपादितस्याऽर्थस्येदं निगमनमिति ।

११३ तथाच वस्तुस्वभावमादाय विरुद्धसर्वधर्माश्रयत्वं युक्तिमवलम्ब्य प्राकृतधर्मानाश्रयत्वमप्राकृतनिखिलधर्माधारत्वं तादृशप्रमाणविषयमर्थस्वभावं स्वीकृत्य च वस्तुशक्तिमाश्रित्य च विरुद्धसर्वरूपत्वमिति शब्दबलार्थबलाभ्यां ब्रह्मणस्त्रेधा निर्णयात्परिणामे चाऽभेदे च सत्यपि सर्वकर्मत्वादितदभाववदनन्तरूपत्वैकत्वाव्यक्तत्ववदासीनत्वादिदूरव्रजनादिवदद्वितीयत्वकर्तृत्वकर्मत्वादिवत्आदेशमात्रमेयमध्यत्वबन्धाभावादिवच्चैवं प्राकृतप्रशासनाद्यभाववत्तथैव च निराकारत्वसाकारत्ववदहिकुण्डलवच्छरीरादिवच्च विकारित्वकुत्सितत्वाद्यभाव इत्यनभिप्राह्यश्चाऽभिनीततमश्च **श्रीमदाचार्य्यपादसूक्तामृतोदाभिषेकनिरस्ताभिसन्तापसाध्वसो** नः सिद्धान्त इत्यकलुषाक्षरम् । स्वरूपतस्तथा सति प्रकाशवैलक्षण्ये दृष्टान्ताविति कञ्चित्प्रति कथञ्चिदन्यं प्रत्यन्यथेतरं प्रति च सुतरामन्यथा प्रकाश इत्यलमलीकशङ्कया । यथा चैतत्तथा प्रथमस्य पञ्चमे—**'इदं हि विश्वं भगवानिवेतर'** इत्यत्र सुबोधिन्यां सिद्धम् । तथाच श्रुत्येकसंवेद्यस्वरूपस्य परस्य ब्रह्मणस्तथा श्रुतिसूत्रसिद्धाया विरुद्धसर्वधर्माश्रयताया भूषणत्वमनभिषवशुभमित्यनुत्प्रेक्ष्यप्रामाण्यपातायाः श्रुतेर्वा तदेकनिदेशदत्तहृदयानां **शुद्धाद्वैतसिद्धान्तिनां** वा नोन्मत्तप्रलापित्वापत्तिः किन्तर्हि

सर्वथाऽन्यथाबुद्धस्य भवत एवेति नांऽशतोऽपि भवदीयो लेखः प्रमत्तप्रलापतामतिवर्त्तते ।

११४ विशिष्टाद्वैतिनश्च न विप्रलपन्ति । यदाह निगमान्तदेशिकः–'नम्यस्य नमतः क्षुद्रान् वरदस्य वरार्थिनः । पुत्रैः पितृमतः क्रीडा कथं ते केन वर्ण्यते । नटवद्भूमिकाभेदैर्नाथ दीव्यन् पृथग्विधैः । पुंसामनन्यभावानां पुष्णासि रसमद्भुतम् । निराधारनिजस्थेम्नो निरुपाधिकशेषिणः । निरपेक्षनियन्तुस्ते निस्समाभ्यधिका गुणाः । अकर्त्तुमखिलं कर्त्तुमन्यथा कर्तुमप्यलम् । सङ्कल्पसचिवः कालः शक्तिलेशः स तावकः । वद्धन्तथा भावयतां मुकुन्दमयत्नविच्छेदिनि कर्मबन्धे। तपस्विनी तत्क्रतुनीतिराद्या सव्रीडमारण्यकथासु तस्थावि' ति ।

११५ श्रीमद्रामानुजाचार्य्याश्च न किल नाऽमुमर्थमनुमन्यन्ते । द्वितीयस्य प्रथमे नवमाधिकरणस्य प्रथमसूत्रेण निरवयवस्य ब्रह्मणो जगदुपादानतायां कृत्स्नस्य तस्य जगदाकारेणोपयोगप्रसक्त्या तत्परिजिहीर्षया सावयवत्वस्वीकारे निरवयत्ववादिनां शब्दानां व्याकोपापत्त्या चिदचिद्वस्तुशरीरकस्य ब्रह्मणः कार्य्यकारणावस्थत्वाभ्युपगमेऽपि चिदचिदंशयोरिव शरीर्य्यंशस्याऽपि कार्य्यत्वाभ्युपगमादुक्तदोषस्य दुरपनेयतया न ब्रह्मणः कारणत्वमुपपद्यत इति पूर्वपक्षे श्रुतेस्त्वित्यादि समाधिसूत्रं व्याकुर्वन्तो यदाहुः–'तुशब्द उक्तदोषं व्यावर्त्तयति । नैवमसामञ्जस्यम् । कुतः ? श्रुतेः । श्रुतिस्तावन्निरवयवत्वं ब्रह्म-

णस्ततो विचित्रसर्गश्चाऽऽह । श्रौतेऽर्थे यथाश्रुति प्रतिपत्तव्यमित्यर्थः । ननु च श्रुतिरप्यग्निना सिञ्चेदितिवत्परस्परान्वयायोग्यमर्थं प्रतिपादयितुं न समर्था? अत आह—शब्दमूलत्वादिति । शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वादस्याऽर्थस्य विचित्रशक्तियोगो न विरुध्यत इति न सामान्यतो दृष्टं साधनं दूषणं वा अर्हति ब्रह्मे' ति । इममेव चाऽर्थं प्रकारविशेषेण तदव्यवहितोत्तरेषु चतुर्षु सूत्रेषु प्रतिपद्यन्ते ।

११६ प्रकृतिश्चेत्यादिसूत्रेऽप्येकस्यैव निमित्ततायाश्चोपादानतायाश्च कार्य्यस्यैककारकनिष्पाद्यतायाश्च लोकविद्विष्टत्वाद्वह्निना सिञ्चेदितिवद्वेदान्तवाक्यानामेकत एवोत्पत्तिं प्रतिपादयितुमसामर्थ्यमित्याशङ्कायामाहुः—'अत्रोच्यते । सकलेतरविलक्षणस्य परस्य ब्रह्मणः सर्वशक्तेः सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते । मृदादेरचेतनस्य ज्ञानाभावेनाऽधिष्ठातृत्वायोगादधिष्ठातुः कुलालादेर्विचित्रपरिणामशक्तिविरहादसत्यसङ्कल्पतया च तथा दर्शननियमः । अतो ब्रह्मैव जगतो निमित्तमुपादानञ्चे' ति । तदव्यवहितोत्तरपाठायामभिध्येत्यादित्रिसूत्र्याञ्चैतदेवोपपादयन्ति ।

११७ वेदान्तदीपेऽपि च—'सर्वधर्मोपपत्तेश्चे' ति सूत्रव्याक्रियायामाहुः—'प्रधानपरमाण्वादिष्वनुपपन्नानां स्वपक्षदोषादित्यादिषूक्तानां सर्वेषां धर्माणां कारणत्वोपपादकानां ब्रह्मण्युपपत्तेश्च ब्रह्मैव कारणम् । प्रधानपरमाण्वादीनां परिमितशक्तिकत्वाल्लोकदृष्टवस्तुस-

जातीयत्वाचाऽनुपपत्तयः सहस्रशः सन्ति । ब्रह्मणः शास्त्रैकसमधिगम्यतया सकलेतरविसजातीयत्वेनाऽचिन्त्यशक्तित्वात्सर्वशक्तित्वश्रुतेश्च सर्वमुपपन्नमित्यर्थ' इति ।

११८ यत्त्वभिध्येत्यादित्रिसूत्र्यामात्मकृतिसूत्रे कर्तृत्वकर्मत्वयोरन्यथा परिहृतो विरोधस्तत्प्रमोहमाहात्म्यम् । सर्वशक्तिकत्वेन सर्वोपपत्त्या व्यवस्थायामनिवृत्तायामन्यथा परिहारे हेत्वाकाङ्क्षायाः सर्वथाऽप्यनुपशमात् । तथा सति श्रुतेर्वा सूत्रस्य वा स्वारस्यस्याऽसम्भवात् । न चाऽप्यसामञ्जस्यम् । निमित्तत्वोपादानत्वयोरैकाधिकरण्यस्याऽपि तत्प्रसङ्गात् । नाऽपि च बुद्धिवैशद्यप्रदर्शनार्थः । प्रत्युत तद्विरहसिद्धेः । अथ वादिवदनविमुद्रणफलः ? निमित्तत्वोपादनत्वयोः सामानाधिकरण्य एव प्रथमतस्तेन प्रत्यवस्थेयमिति नैतद्वचनं वञ्चनमतिहाय कस्मैचन तिष्ठेत । एवमविकल्पितोऽपि यथा नाऽयमात्मानं स्थिरयितुं पारयति तथा वर्णिकां पुनरुदाहार्ष्म ।

११९ यदपि ब्रह्मणो विरुद्धसर्वधर्माश्रयत्वमेवमसंसृष्टसङ्कोचमभ्युपयन्तोऽपि भोक्त्रापत्त्यधिकरणे—'**मृत्सुवर्णादिवद्ब्रह्मस्वरूपपरिणामस्तु नैवाऽभ्युपगम्यते । अविकारत्वनिर्दोषत्वादिश्रुते**' रित्याहुस्तदपि मदपिहितमतिमूलकम् । व्याघातानुपपत्तेः । दृष्टान्ते च न स्वरूपपरिणामः । तथा सति कलशकुण्डलयोर्न मृत्सुवर्णे प्रतिसन्धीयेयाताम् । तथा प्रतिसन्धायिन्यः श्रुतयश्च प्रामाण्यविप्लवं सहेरन् । व्याघातप्राघुणिकश्च न आवरकभ्रान्तं परिहरेत् । यदाहुर्वाचारम्भणवाक्यं व्याकुर्वाणाः—

'अतो घटाद्यपि मृत्तिकेत्येव सत्यं मृत्तिकाद्रव्यमित्येव सत्यम्। प्रमाणेनोपलभ्यत इत्यर्थ' इति। विशिष्टविशेषणसद्वारकोऽपि न स्वरूपपरिणामः। चिदचित्प्रतिसन्धानानुपपत्तेः। न ह्येव दधि प्ररूढोऽपि दुग्धं प्रतिसन्धत्ते।

१२० केवलस्तु सर्वत्र तेष्वन्यथाभावः। सोऽपि स एव चेत्? विशेषानुपपादप्रसङ्गः। अपरिहार्य्याश्च प्रदर्शिता आपत्तयः। अथ तात्त्विकत्वातात्त्विकत्वाभ्यां सोऽयमुपपद्यते? न स तर्हि सः। न च न खलु नैष दोष इत्यास्थातव्यम्। प्रमाणविप्लवात्। कण्ठे कुठारपातश्च। अभ्युपयन्ति हि ते शरीर्य्यंशस्याऽपि कार्य्यत्वम्। अन्यथाभाव एव च तत्। अथ न तत्र संस्थानान्तरयोगः? सत्यम्। स्वरूपाप्रतियोगित्वात्त्ववैशेष्यं नाऽतिवर्त्तामहे। तथाच तादृशश्रुतिसाध्वसनिराससाहसप्रस्तुतावसरं तत्त्वत्रयाकाण्डताण्डवममार्मिकमधुरम्। श्रुतिश्च-'सदेव सोम्येदमग्र आसीदि' ति केवलं ब्रह्मैव प्रकृत्य सृष्टिमाहेति दिक्।

१२१ शेषस्त्वनतिप्रयोजनपरिहारश्च कृतपूर्वविचारश्चेत्युपेक्ष्यते। तत्त्वदीपप्रकाशाऽऽवरणभङ्गप्राभञ्जनमारुतशक्त्यादिभिस्त्वभिनिवेशनिर्हार इत्यनभिहार्य्यवैभवभूयिष्ठा नः श्रीः।

संसक्ताङ्गुलिहस्तया ललितया मध्ये गृहीतः शनै-
गृह्णत्याऽपि च राधया करयुगं वर्णोदकैरार्द्रितः।
सोऽयं कोऽपि कपोलयोररुणितः कीर्णाञ्जनश्चक्षुषो-
र्लीलाकाकरमर्थितस्तरुणिमोन्मेषश्चिरं दृश्यताम्॥ १॥

यत्रौचित्यविचारचारुचरिताः सत्पक्षपातव्रता

नालीकप्रथमानुरागरसिका हंसाः प्रशंसाजुषः ।

सावर्त्ता प्रतिकूलमूलकपणप्रातप्रकामोच्छ्रया

सिद्धिं सेयमभीप्सितां निविशतां सिद्धान्तसिद्धापगा ॥ २ ॥

---

श्रीमदाचार्य्यचरणाः शरणागतवत्सलाः ।

अङ्गीकुर्यन्तु कृपया कृतिमेतां समर्पिताम् ॥ ३ ॥

---

इति श्रीमदुपनिषत्सीमन्तिनीसीमन्तसिन्दूरसिन्दूरितश्रीश्रीकृष्णपादारविन्द-

मकरन्दासवास्वादसमर्पणप्रतिक्षणसक्षणकरुणारुणापाङ्गभङ्गाभिलाषोद्वेलदैव-

जनसम्मर्दसम्मृष्टमणिकेयूरकोटिसुकृतिक्षोणीपतिमुकुटमणिप्रभा-

प्ररोहसमभ्यर्चितश्रीमदाचार्य्यपादचरणनखचन्द्र-

चन्द्रिकाम्भःशिलोञ्छलिप्साव्यग्रेण शुद्धाद्वैतपुष्टिमार्गसिद्धान्त-

पण्डितेन श्रीकृष्णदासप्रभृतिक्षितिपति-

प्रकाण्डग्रासग्रष्टप्रतिष्ठत्रिगूढोपाख्य-

भट्टश्रीदेवकीनन्दनशर्म्मतनु-

जन्मना भट्टश्रीवलभद्रशर्म्म-

कविकाव्यरत्नाकरेण प्रणीता

**सिद्धान्तसिद्धापगा**

सम्पूर्णा.

## इसे और पढ़ लीजिये.

---

**स्वागत**—राजराजेश्वर महाराज श्रीमान् पञ्चम जॉर्ज के भारत में पदार्पण के महोत्सव में इस काव्य की रचना हुई है। इसके लेखक पण्डित मट्ठी बल्लभशर्म्मा कवि काव्यरत्नाकर हैं। जो हिन्दी के आराधक इस कविता को पढ़ चुके हैं उनसे अब कुछ भी कहने की आवश्यकता नहीं है। पर जो इसके परिचय से अभी तक वंचित हैं, उनसे अनुरोध है कि वे इसे एक बार अवश्य पढ़ें। हमारे परिचित साहित्य-सेवियों का कथन है कि दिल्ली के राज्याभिषेक के अवसर पर यह काव्य सर्वोत्कृष्ट और भाव-पूर्ण हुआ है। अभ्युदय का कथन है कि—"इसमें कविने सम्राटको सूर्यके तुल्य साबित करने में अपनी प्रतिभा का अच्छा परिचय दिया है। हिन्दी प्रेमी इसे पढ़ कर अवश्य ही प्रसन्न होंगे"। बिना मूल्य वितरित। पोस्टेज ॥ आध आना।

**कलि-कलह**—देश में कलह के अकुण्ठित अधिकार का यह खासा चित्र है। कविता अत्यन्त सरल और मधुर है। पद्य-संख्या सौ से भी अधिक है। प्रत्येक पद्य के प्रत्येक पाद में नये नये मुहाविरे हैं। इसे इच्छा हो तो काव्य कहिये, या हिन्दी-भाषा के अवयव कितने पुष्ट हैं, इसका जगमगाता एक उदाहरण। जिस भाषा में 'लड़ाई' इन तीन अक्षरों से कही जानेवाली बात के कहने के लिये सैकड़ों मुहाविरे हों, उसकी सर्वाङ्गपूर्णता में क्या संदेह? भाषा बोलचाल की, छन्द सीधा, वर्णन चतुरता से भरपूर, देश की दशा का सच्चा हाल, मुहाविरोंकी भरमार, हास्य और करुणाका सङ्गम, लेखक वही काव्यरत्नाकरजी, कहिये, इससे अधिक और क्या होना चाहिये? पुस्तक अभी छपी नहीं, छपेगी। मूल्य चार छः आने से अधिक नहीं। इतने पर भी जो आप अपनी मुट्ठी ढीली नहीं करेंगे तो बस हो चुका?

**पुष्टिमार्गीय-आचार्य्य-परम्परा**—जिन्हें उक्त परम्परा में संदेह है, जो भारतमार्तण्ड पं. गट्टूलालजीसे किसी न किसी रूप में विद्वेष कर पण्डित-विद्रोह के पातक पहले फँसना चाहते हैं, या जिन्हें दमड़ी भर अकल नहीं पर घमंड का ओर छोर नहीं, उन काले कलावन्तुओंकी बड़बड़ाहट का हृष्ट कड़ा जवाब। इसके टाइटल पेजपर छपे हुए—'देखते हैं कि लोग क्या जवाब देते हैं। कुछ भी कहते हैं या मुह पै नकाब देते हैं' इस फिकरे को

पढ कर अभी तक लोगो ने कुढने के सिवा और कुछ भी नही कर पाया। सच तो यह है कि इसकी दलीलें वकील और एटलाओं के दांत खट्टे करती है। वे भी इन्हे सुन कर दांतोंके तले अंगुलियां दवाते हैं। फिर विचारे किसी एक ए मे फे मे की तो वात ही क्या? लेखक वे ही काव्यरत्नाकरजी। विना मूल्य वितीर्ण। पोस्टेज ॥ आध आना।

**प्रशस्तित्रितयम्**—तमाखू, चुरुट (वीडी) और मदिरा, इन तीन चीजों की प्रशस्ति। कविता की भाषा संस्कृत। लेखक-काव्यरत्नाकरजी। पुस्तक कैसी वनी है, कविता की मधुरता कैसी है, इन प्रश्नों के हल करने का हमे अधिकार नही। मालिन अपने वेर कभी खट्टे नही वताती। एक वार चाख लो। फिर जैसी आपकी इच्छा हो, हम वुरी भली सब सुनने को हाजिर है। मूल्य पोस्टेज के साथ =) आना।

**विद्याप्रभाव**—विषय नाम से स्पष्ट है। हिन्दी मे संस्कृत के प्रमाणों से परिपूर्ण एक उत्तम व्याख्यान। मूल्य पाव आना। पोस्टेज ॥ आध आना।

**शतरंज-सरोज**—अव अधीर न होईये, पुस्तक छप रही है। शतरंजके खिलाडियों का एक सच्चा दिल वहलाव, और साथ ही इल्म को अच्छी मदत पहुचाने वाला एक अच्छा उस्ताद, वस यह एक ही पुस्तक है। लेखक—पं० भट्टश्रीदेवकीनन्दन शर्म्मा। मूल्य एक १) रुपये से कम न होगा। पोस्टेज जुदा।

## शुद्धाद्वैत-दर्शन !!!

श्रीवालकृष्ण-संस्कृत-पाठशाला के अध्यापक पं० रमानाथ शास्त्रीजी इसके रचयिता है। पुस्तक हिन्दी मे लिखा गया है। जिन्हे शुद्धाद्वैत के ज्ञान की उत्कट इच्छा है उन्हे इस पुस्तक को अवश्य पढना चाहिये। सारांश-पुस्तक अत्युत्तम है। मूल्य ।।) आने। पोस्टेज अलग।

पता-शुद्धाद्वैतसिद्धान्तकार्यालय,<br>वडा मंदिर, भूलेश्वर,<br>वंवई.

कार्य्यकर्ता.